# स्तोत्रकुसुमाञ्जलिः।

प्रकाशक

श्रीमहामण्डल उपदेशक महाविद्यालय।

सम्पादक स्वामी विवेकानन्द।

B. D. PRESS.

श्रीविश्वनाथो जयति ।

# स्तोत्रकुसुमाञ्जलिः ।

श्रीभारतधर्म्ममहामण्डल
के
उपदेशक महाविद्यालय
से
प्रकाशित ।

श्रीभारतधर्म्म प्रेस, काशीमें मुद्रित ।

संवत् १९७८ वि० ]        [ मूल्य ।) आना ।

# श्रीभारतधर्ममहामण्डल ।

हिन्दूजातिकी यह भारतवर्षव्यापी महासभा है। सनातनधर्मके प्रधान २ धर्म्माचार्य और हिन्दू स्वाधीन नरपतिगण इसके संरक्षक हैं। इसके कई श्रेणीके सभ्य तथा अनेक शाखासभाएं हैं। हिन्दू नर-नारी मात्र इसके साधारण सभ्य हो सकते हैं। साधारण सभ्योंको केवल दो रुपया वार्षिक चन्दा देना होता है। उनको मासिक पत्र विना मूल्य मिलता है और इसके अतिरिक्त इन साधारण सभ्यमहोदयोंके वारिसोंको भी समाजहितकारी कोषसे सहायता प्राप्त होती है। पत्र व्यवहारका पता यह है:—

जनरल सैक्रेटरी

**श्रीभारतधर्म्ममहामण्डल**

प्रधान कार्यालय,

जगत्गंज, बनारस।

# भूमिका ।

—o—

हिन्दूजातिकी भारतवर्षव्यापी धर्ममहासभा श्रीभारतधर्ममहामण्डलके शास्त्रप्रकाशक विभाग-का विराट् आयोजन हिन्दूजातिकी आध्यात्मिक उन्नति, आधिदैविक उन्नति और आधिभौतिक उन्नतिके लिये किया गया है। वास्तवमें जवतक सनातनधर्म्मावलम्वी प्रजाकी धार्म्मिक उन्नतिके साथ ही साथ उसकी सामाजिक उन्नति, आर्थिक उन्नति और नैतिक उन्नतिका प्रयत्न नहीं किया जायगा तवतक धर्म्मप्राण इस आर्यजातिकी यथार्थ उन्नति होना असम्भव है। व्यक्तिगत और जाति-गत उन्नतिके लिये ग्रन्थप्रकाशनका काम सवसे प्रधान समझा जा सक्ता है क्योंकि ग्रन्थही ज्ञानके आधाररूप होनेके कारण सव प्रकारकी उन्नतिका वीज जातीय ग्रन्थोंमें सुरक्षित रह सक्ता है। इस कारण श्रीमहामण्डलके शास्त्रप्रकाशक विभाग-द्वारा अभीतक निम्नलिखित श्रेणीके ग्रन्थरत्न

प्रणीत, संग्रहीत और प्रकाशित हुए हैं और हो रहे हैं।

(१) कर्म्म, उपासना और ज्ञान सम्बन्धीय साम्प्रदायिक विरोध दूर करनेके उपयोगी विभिन्न गीता और संहिता आदि धर्म्मग्रन्थ और उनके हिन्दी अनुवाद वैज्ञानिक टिप्पणियों सहित। (२) दर्शनशास्त्र जो सनातनधर्म्मविज्ञानकी भित्ति-रूप हैं उनके अनेक लुप्त ग्रन्थोंका उद्धार करके सब प्रकारके दार्शनिक सूत्रोंपर वर्त्तमान देश-कालके अनुसार संस्कृतभाष्य और हिन्दीभाषाकी पुष्टिके लिये सबका हिन्दी संस्करण। (३) हिन्दू-बालक बालिकाओंकी धार्मिक शिक्षा, सामाजिक-शिक्षा और नैतिक शिक्षाके उपयोगी पाठ्य पुस्तकें हिन्दी भाषामें प्रणयन और मुद्रण। (४) हिन्दी-भाषा जो हिन्दुस्थानकी वर्त्तमान मातृभाषा है उसकी पुष्टिके लिये अनेक प्रकारके आवश्यकीय ग्रन्थरत्नोंका प्रणयन और प्रकाशन। (५) हिन्दू-जातिकी धार्म्मिक, सामाजिक और नैतिक उन्नतिके

लिये अनेक छोटी छोटी पुस्तिकाओंका प्रकाशन और विना मूल्य वितरण। (६) हिन्दू जातिकी सब प्रकारकी उन्नतिके लक्ष्यसे अनेक प्रकारके सूची ग्रन्थ ( बुक्स ओफ रिफरेन्स ), यथा–पुराण और स्मृतिके श्लोकोंकी सूचीके ग्रन्थ, कहावत, न्याया-वली और सुभाषित आदिके ग्रन्थ। ( ७ ) वर्त्त-मान देशकालोपयोगी शिक्षाविस्तारके लिये वि-भिन्न प्रकारके संग्रह ग्रन्थ। ( ८ ) हिन्दीभाषामें सनातनधर्मके वैदिक दर्शन और नाना विज्ञानोंसे पूर्ण धर्म्मकल्पद्रुम नामक एक विश्वकोष ग्रन्थ।

ऊपर लिखित श्रेणीके ग्रन्थरत्नोंके प्रणयन और प्रकाशनकार्यके साथ ही साथ भारतवर्षकी अन्य भाषाओंमें तथा अंग्रेजी भाषामें उनका अनुवाद होकर प्रकाशित करनेका भी प्रयत्न जारी है।

हिन्दूजातिके उपासक सम्प्रदायोंमेंसे साम्प्र-दायिक विरोधरूपी अग्निके एक वार ही बुझा देनेके लिये श्रीमहामण्डल नाना प्रकारसे पुरुषार्थ

कर रहा है। उसी पुरुषार्थके सम्बन्धसे यह स्तोत्र-कुसुमाञ्जलि भी प्रकाशित की जाती है। हिन्दू-समाजमें उपासनाके जितने अङ्ग प्रत्यङ्ग हैं, उन सबके सम्बन्धसे ये स्तुतियाँ चुनकर प्रकाशित की गयी हैं।

श्रीमहामण्डलकी मंत्रीसभाने यह आज्ञा दी है कि श्रीमहामण्डल उपदेशकमहाविद्यालय और आर्यमहिलामहाविद्यालयके प्रधान अध्यापक महाशयगण जिनको उचित समझेंगे, यह ग्रन्थरत्न विना मूल्य उन्हें उपहार भी दे सकेंगे।

विजयादशमी
सं० १९७८ वि०

विवेकानन्द
प्रधानाध्यक्ष शास्त्रप्रकाशक-विभाग

# विषयानुक्रमणिका।

# स्तोत्रकुसुमाञ्जलिः

## श्रीगुरुस्तवराजः

:o:

ब्रह्मस्थानसरोजमध्यविलसच्छीतांशुपीठस्थि-
तम्, स्फूर्ज्जत्सूर्यरुचिं वराभयकरं कर्पूरकुन्दो
ज्ज्वलम्। श्वेतस्रग्वसनानुलेपनयुतं विद्युद्रुचा-
कान्तया, संश्लिष्टार्द्धतनुं प्रसन्नवदनं वन्दे गुरुं
सादरम् ॥१॥ मोहध्वान्तमदान्धताग्रहवतां चक्षूंषि
चोन्मीलयन्, यश्चक्रे रुचिराणि तानि दयया
ज्ञानाञ्जनाभ्यञ्जनैः। व्याप्तं यन्महसा जगत्त्रयमिदं
तत्त्वप्रबोधोदये, तं वन्दे शिवरूपिणं निजगुरुं
सर्वार्थसिद्धिप्रदम् ॥ २ ॥ मातङ्गी भुवनेश्वरी च
बगला धूमावती भैरवी, तारा छिन्नशिरोधरा भग-
वती श्यामा रमा सुन्दरी। दातुं न प्रभवन्ति वाञ्छि-
तफलं यस्य प्रसादं विना, तं वन्दे शिवरूपिणं निज-

गुरुं सर्वार्थसिद्धिप्रदम् ॥३॥ काशी द्वारवती प्रयाग-मथुरायोध्या गयावन्तिका, माया पुष्कर–काञ्चि-कोत्कलगिरिः श्रीशैलविन्ध्यादयः । नैते तारयितुं भवन्ति कुशला यस्य प्रसादं विना, तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥ ४ ॥ रेवासिन्धु-सरस्वतीत्रिपथगाः सूर्य्यात्मजा कौशिकी, गङ्गासागरसङ्गमोऽद्रितनया लौहित्यशोणादयः । नालं प्रोक्तफलप्रदानविषये यस्य प्रसादं विना, तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥५॥ सत्कीर्त्तिर्विमलं यशः सुकविता पाण्डित्यमारोग्यता, वादे वाक्पटुता कुले चतुरता गाम्भीर्यमक्षोभ्यता । प्रागल्भ्यं प्रभुता गुणे निपुणता यस्य प्रसादाद्भवेत्, तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥ ६ ॥ लोकेशो हरिरम्बिका स्मरहरो मातापिताऽभ्यागता, आचार्य्यः कुलपूजितो यतिवरो वृद्धस्तथा भिक्षुकः । नैते यस्य तुलां व्रजन्ति कलया कारुण्यवारांनिधेः, तंवन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥७॥ ध्यानं दैवतपूजनं गुरुतपो दानाग्निहोत्रादयः,

पाठो होमनिषेवणं पितृमखा ह्यभ्यागतार्चाबलिः ।
एते व्यर्थफला भवन्ति सततं यस्य प्रसादं विना, तं
वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥८॥
पूर्वाशाभिमुखः कृताञ्जलिपुटः श्लोकाष्टकं यः पठेत्,
पौरश्चर्यविधिं विनाऽपि लभते मन्त्रस्य सिद्धिं पराम् ।
नो विघ्नैः परिभूयते प्रतिदिनं प्राप्नोति पूजाफलम्,
देहान्ते परमं पदं निविशते यद्योगिनां दुर्लभम् ॥९॥

इति श्रीवामकेश्वरतन्त्रे पार्वतीशिवसंम्वादे
श्रीगुरुस्तवराजः ।

# श्रीभगवत्स्तुतिः ।

प्रणमज्जनतापहारिणौ जगदुत्तरशक्तिधारिणौ । सततं शुभकारिणौ हरेश्चरणौ नः शरणं हि केवलम् ॥ १ ॥ अवितर्क्यतनुत्वनिर्णयेऽप्यथ संश्रितचित्तचारिणः । धृतसम्मदसच्चिदात्मनश्चरणौ सत्करुणौ हरेर्नुमः ॥ २ ॥ सर्वजीवहितैषित्वव्यापकत्वादिलक्षणः । जयतात्सार्वभौमोऽसौ धर्म्मः श्रीभगवानिव ॥ ३ ॥

अभेदेऽप्यहमेवास्मि त्वद्विभूतिर्न मे भवान्।
सच्चिदानन्द! चित्तेश! यतो वीचिः समुद्रजा ॥१॥
त्वं सर्वज्ञः सर्वदर्शी करुणात्मन्! जगद्गुरो!।
अल्पज्ञस्य च मे चित्ते दिव्यं ज्ञानं प्रकाशय ॥ २ ॥
विश्वमूर्ते! कृपस्वैवं त्वदंशप्राणिषु प्रभो!। यथा
स्युः कुपथं हित्वा पराऽऽनन्दार्जनोन्मुखाः ॥ ३ ॥
इदं विश्वं महादेव! त्वत्तोऽजास्वक्तविग्रह!।
जायते लीयते चान्ते त्वय्येव जगदाश्रये ॥४॥
प्रलयान्ते रजोरूपिन्! सर्वलोकपितामह!। उत्पा-
दयसि वैचित्र्यावहं सर्वं त्वमेव तत् ॥ ५ ॥
विष्णो! त्वं सत्त्वमास्थाय सृष्टिलीलां विल-
क्षणाम्। रक्षस्यसिद्धघटनघटनायां पटीयसीम् ॥६॥
महारुद्र! भवानेव विभावितमोगुणः!। अपार-
सुषमागारसृष्टिधारापहारकः ॥७॥ तापहारिन्!
त्वदीयानां हृदयाऽविनयं हर। स्वान्ताऽसद्वासना-
नाशात्कुर्वंताँश्च सदुन्मुखान् ॥८॥ येनैते द्वेषमुत्सृज्य
सङ्गता भ्रातृभावतः। भवेयुर्भवतोऽनन्तमहिम्नां
कीर्त्तने रताः ॥ ९ ॥ कृपाकटाक्षनिक्षेपपूर्वकं जगतां

पितः! । असत्कर्मविपर्यस्तान् स्वाग्र्यपुत्रान् समुद्धर ॥१०॥ नोचेदितोऽपि सुबलः कदा कालः समेष्यति । पतितोद्धारकेत्याख्यासार्थक्याऽऽपादनाय ते ॥ ११ ॥ याऽऽर्य्यजातिर्जगद्गुर्वी जगद्विजयिनी पुरा। धर्मराज ! प्रमादेन जगद्धिक्तुकतां गता ॥ १२ ॥ इतोऽपि प्रबलो दण्डः क एषां करुणार्णव ! इदानीमप्यसद्भोगविरतिर्यन्न जायते ॥ १३ ॥ जीवानान्तु गतिर्नित्यं निम्नगाऽस्ति निसर्गतः। पतितोद्धारकस्त्वञ्च स्मारयामि ततोऽभिधाम् ॥१४॥ मोहनिद्रातमो व्याप्ते सदाऽऽर्य्यहृदये यथा। ज्ञानज्योतिर्विकाशः स्याज्ज्ञानमूर्ते ! तथा कुरु ॥ १५ ॥ आध्यात्मिकं सार्वभौममेकदेशित्ववर्जितम्। सात्त्विकं ज्ञानमार्य्येषु ज्ञानात्मन् ! सुप्रकाशय ॥१६॥ निजानाश्चिरभक्तानां भक्तचित्तैकसद्मग !। हृत्कपाटमपावृत्य रम्यां मूर्तिं प्रदर्शय ॥१७॥ येनैते त्वामविस्मृत्य हृषीकेश ! प्रबोधिताः । न भवेयुः स्वार्थपरा भूयोऽपीन्द्रियलोलुपाः ॥१८॥ यज्ञेश्वर ! नरा यद्यप्याधुनिकाः समत्सराः। त्व-

द्रहस्यानभिज्ञाश्च प्रमादालस्यदोषतः ॥ १६ ॥
तथापि पूर्वजास्त्वेषां कर्मसद्मनि भारते । आसन्नेव
हि तत्त्वज्ञा भक्तास्तव पुरोन्नताः ॥२०॥ विचार्य्यैत-
ज्जगत्प्राण ! कृपयैषास्मतिम्पुनः । कुरुष्व कर्मविज्ञान-
शक्तिसम्पद्विलक्षणाम् ॥ २१ ॥ तपोमूर्ते ! त्वत्प्रभाव-
विस्मृत्या दुर्गता अपि । सन्तु त्वत्कृपयाऽकाम-
व्रता द्वन्द्वसहिष्णवः ॥ २२ ॥ दानमूर्ते ! प्रकृत्या
त्वत्सेवाऽऽसक्तानिमान् कदा । कर्ताऽसि कलि-
पापघ्न ! सत्त्वदानपरायणान् ॥ २३ ॥ महा-
काल ! युगाधार ! सृष्टिस्थित्यन्तकारिणः । तवेच्छ-
याऽस्ति प्रत्येकयुगेऽन्ययुगसम्भवः ॥ २४ ॥
जगज्जनक ! विश्वात्मन् । तस्मादभ्यर्थ्यतेऽधुना ।
भूयात्सत्त्वगुणोपेतः कालोऽयमपि दुस्तरः ॥२५॥
स्युः कुपुत्राः परं मातः ! कुमाता न श्रुता ह्यतः ।
श्लाघ्येतान् भारतक्षोणि ! यथा स्युस्तव सेवकाः
॥२६॥ व्यवहाररताश्चापि प्रवृत्तिज्ञाऽनुगामिनः ।
सत्येन लोका विजिता भवन्तीतिमतस्थिताः ॥२७॥
न च्युता मोक्षपदतो ये विप्रास्तेऽधुना प्रभो ! ।

विचलन्तोऽवलोक्यन्ते सत्यात्मन्! किन्न रक्षसि
॥२८॥ इतोऽपि पश्य भगवन्! तेजोरूप! विपद्दशाम्।
निस्तेजस्का शौर्य्यवीर्यहीना जाता जनाः समे॥२९॥
तस्माद्धैर्य्यम्मनःप्राणेन्द्रियशक्तिनियामकम्। चिती-
र्य्याशु पुनः क्षात्रन्तेजो वर्द्धय वर्द्धय॥ ३०॥
अयि मातर्महालक्ष्मिः! भूयः संयोजय स्वकान्।
अपहारितसर्वस्वान् बालानार्य्यजनान्धनैः ॥३१॥
प्रचीयताञ्च वाणिज्यं सर्ववृत्तिनिबन्धनम्।
येनैतद्भारतं भूयो लीलाभूमिर्भवेत्तव॥ ३२॥
साक्षाद्भ्याता विश्वकर्मन्! शिल्पविद्या त्वधोग-
तिम्। करार्पणेन भगवन्! निजां स्मृत्वा
समुद्धर॥ ३३॥ स्वस्वधर्माधिकारानुसारं सर्वनिया
मकः। धर्मरूप! भवानेव सर्वेभ्यश्च फलप्रदः॥ ३४॥
सर्वधर्माश्रय! विभो! नृणां सङ्कुचिते हृदि।
त्वत्सार्वभौमभावस्य प्रादुर्भावः कदा भवेत्॥३५॥
योगीश्वर! विभो! कृष्ण! लीलयैतद्भवान्सदा।
सृजत्यवत्यत्ति विश्वं योगेन निजकौशलात्॥ ३६॥
अतोऽधुना त्वदुक्तस्य गीतोपनिषदि प्रभो!।

कर्मयोगस्य विज्ञानप्रसारोऽस्तु महीतले ॥ ३७ ॥ शक्तिस्ते विलसत्यकुण्ठितगतिर्या सर्वकार्येषु तत्, साहाय्याश्रयतो व्यधिष्महि वयं यं वै महान्तम्मखम् । तं सम्पूर्य सुमङ्गलेन कृतिनो योज्याः प्रभो ! सन्ततमोंतत्सत्तव मन्त्रमेतदधुनोच्चार्य्याथ वन्दामहे ॥ ३८ ॥ इति श्रीजातीयमहायज्ञसाधने श्रीभगवत्स्तुतिः ।

---o---

# श्रीधर्मस्तवराजः ।

---:o:---

मातस्तवैव परमैः प्रभावैरभिभूयते । प्रलये भगवान् विष्णुर्जगतां योगनिद्रया ॥ १ ॥ योगनिद्रां पुनर्मातर्विहाय मधुकैटभौ । हन्ति जाग्रज्जगन्नाथस्तेऽनुकम्पानुकम्पितः ॥ २ ॥ अनुकम्पां परां प्राप्य परेशो जगदम्बिके । तवैव जगतामीशो तनुते विश्वमङ्गलम् ॥ ३ ॥ निखिलैरपि यो देवैरजेयो महिषासुरः । यातस्ते प्रधनं प्राप्य निधनं सोऽपि दुर्मतिः ॥ ४ ॥ निहते महिषे देवाः पित-

रश्च पराक्रमम् । स्तुवन्तो व्याहरन्तस्ते प्रमोदन्ते महर्षयः ॥ ५ ॥ देवैर्दिव्यैः स्तवैर्मातः ! सन्तुष्टा त्वञ्च संस्तुता । जघन्थ प्रबलं शुम्भं निशुम्भञ्चापि दुर्जयम् ॥ ६ ॥ त्वमेव जगतामम्ब ! जगत्पालनतत्परा । त्वमेव जगतां मातर्विधातुं शिवमुद्यता ॥ ७ ॥ महाविद्या महामाया महामेधा महास्मृतिः । महामोहा त्वमेवासि महादेवी महासुरी ॥ ८ ॥ गायत्रीप्रतिपाद्यं यत्परब्रह्मेति गीयते । सा त्वमेव जगन्मातर्नित्या चानित्यरूपिणी ॥९॥ त्रिधा मात्रात्मिका मातस्त्वमोङ्कारस्वरूपिणी । त्वं त्रैगुण्यप्रधाना त्वं दधाना भावनात्रयम् ॥ १० ॥ अन्नपूर्णा महाविद्या महाकाली त्वमन्नदा । त्वं दुर्गा दुर्गसंसारसागराच्चापि तारिणी ॥ ११ ॥ वेदानां चोपवेदानामङ्गोपाङ्गैर्विराजताम् । स्मृतीनाञ्च पुराणानां तन्त्राणाञ्चाधिदेवता ॥ १२ ॥ सर्वेषामेव शास्त्राणामधिष्ठात्री परात्परे । त्वमेव जगदालम्बे ! जगन्मातर्दयामयि ! ॥ १३ ॥ श्रीश्रीदेवी महादेवी सर्व्वशक्तिमयी विभुः । जननि ! त्वंमहावाणीरूपिणी

देवपूजिते ! ॥ १४ ॥ त्वत्त एव कृपां प्राप्य तत्त्वज्ञानेन पूजिताः । ब्रह्मेश्वरविराड्रूपं द्रष्टुं शक्ताः परात्मनः ॥ १५ ॥ त्वं ब्रह्मरूपिणी मातस्त्वमेव जगदीश्वरी । त्वल्लीलामात्रमेवास्ति विराड्देहो विराड्विभोः ॥ १६ ॥ मूको भवति वाचालः पङ्गुः पर्वतलङ्घकः । त्वत्कृपातो जगन्मातर्महामाये ! नमोऽस्तु ते ॥१७॥ या देवी सर्वभूतेषु विष्णुमायेति शब्दिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १८ ॥ या देवी सर्वभूतेषु चेतनेत्यभिधीयते । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १९ ॥ या देवी सर्व्वभूतेषु सत्तारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २० ॥ परमानन्दरूपेण या स्थिता सर्वदेहिषु । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २१ ॥ या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २२ ॥ मनोरूपेण या देवी जगतां प्राणिषु स्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २३ ॥ या देवी

सर्वभूतेषु चित्तरूपेण संस्थिता। नमस्तस्यै नमस्त
स्यै नमस्तस्यै नमो नमः ॥ २४ ॥ अहङ्कारस्व-
रूपेण या स्थिता सर्वदेहिषु । नमस्तस्यै नमस्तस्यै
नमस्तस्यै नमो नमः॥ २५ ॥ या देवी सर्व-
भूतेषु स्मृतिरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै
नमस्तस्यै नमो नमः ॥ २६ ॥ या देवी सर्वभूतेषु
शक्तिरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै
नमो नमः ॥ २७ ॥ अभावेनापि भावेन या स्थिता
जगतीतले। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो
नमः ॥ २८ ॥ या देवी सर्वभूतेषु वृत्तिरूपेण संस्थि-
ता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥२९॥
इन्द्रियाणामधिष्ठात्रीस्वरूपेणापि या स्थिता । नम-
स्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३० ॥
या देवी सर्वभूतेषु दृश्यादृश्यस्वरूपिणी । नम-
स्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३१ ॥
या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता। नमस्तस्यै
नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३२ ॥ या देवी
सर्वभूतेषु निद्रारूपेण संस्थिता । नमस्तस्यै नम-

स्तस्यै नमस्तस्यै नमो नमः ॥ ३३ ॥ या देवी सर्वभूतेषु भीतिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३४ ॥ या मैथुनेषु मैथुन्यरूपेणापि च संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३५ ॥ या देवी सर्वभूतेषु छायारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३६ ॥ या देवी सर्वभूतेषु धृतिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३७ ॥ या देवी सर्व्वभूतेषु परिणामस्वरूपिणी । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३८ ॥ या देवी सर्व्वभूतेषु तृष्णारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३९ ॥ या देवी सर्व्वभूतेषु क्षान्तिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥४०॥ या देवी सर्व्वभूतेषु लज्जारूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥४१॥ या देवी सर्व्वभूतेषु शान्तिरूपेण संस्थिता । नमस्तस्यै नस्तमस्यै

मस्तस्यै नमो नमः॥ ४२॥ या देवी सर्व्वभूतेषु
ष्टिरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै
मो नमः॥ ४३॥ या देवी सर्व्वभूतेषु कान्तिरूपेण
संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः
४४॥ यत्तेजसा जगद्व्याप्तं सर्व्वमेतच्चराचरम्।
मस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ४५॥
ा प्रकाशात्मिका देवी सर्वभूतेषु संस्थिता।
मस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ४६॥
ा देवी सर्व्वभूतेषु तमोरूपेण संस्थिता। नम-
स्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ४७॥
ा देवी सर्व्वभूतेषु भ्रान्तिरूपेण संस्थिता।
मस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ४८॥
या देवी सर्व्वभूतेषु द्वन्द्वभावेन संस्थिता। नम-
स्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ४९॥
द्धात्मिका च या देवी संस्थिता भुवनेश्वरी।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ५०॥
या देवी सर्व्वभूतेषु प्रीतिरूपेण संस्थिता। नम-
स्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ५१॥

या देवी शान्तभक्तेषु भक्तिरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ५२ ॥
या देवी सर्व्वभूतेषु श्रीस्वरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ५३ ॥
या देवी सर्व्वभूतेषु लक्ष्मीरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ५४ ॥
या देवी सर्व्वभूतेषु दयारूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ५५ ॥
या देवी सर्व्वभूतेषु मातृरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ५६ ॥
या देवी बीजरूपेण संस्थिता भुवनेश्वरी। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ५७ ॥
या देवी सर्व्वभूतेषु जातिरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ५८ ॥
क्षेत्रात्मिका च या देवी राजते जगदीश्वरी। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ५९ ॥
क्षेत्रज्ञा चैव या देवी सर्व्वपूज्या महेश्वरी। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ ६० ॥

सद्विज्ञानस्वरूपेण या स्थिता जगदम्बिका । नम-
स्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ६१ ॥
यावतारस्वरूपेण जगत्कल्याणकारिणी । नमस्त-
स्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ६२ ॥
ऋषिस्वरूपा या देवी राजते भुवने वने । नमस्तस्यै
नमस्तस्यै नमस्तस्यै नमो नमः ॥६३॥ या देवी सर्व्व-
भूतेषु देवभावेन संस्थिता । नमस्तस्यै नमस्तस्यै
नमस्तस्यै नमो नमः ॥ ६४ ॥ या देवी देवतामध्ये
दैवी शक्तिः प्रकीर्त्तिता । नमस्तस्यै नमस्तस्यै
नमस्तस्यै नमो नमः ॥ ६५ ॥ या देवी पितृवर्गेषु
पितृभावेन संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै
नमो नमः ॥ ६६ ॥ या देवी देवयज्ञेषु स्वाहारूपेण
संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः
॥६७॥ या स्वाहा च स्वधा चापि वषट्कारस्वरूपिणी ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥६८॥ या
देवी सर्व्वभूतेषु धर्म्मरूपेण संस्थिता । नमस्तस्यै नम-
स्तस्यै नमस्तस्यै नमो नमः ॥६९॥ या देवी वेदरूपेण
संस्थिता धर्म्मरूपिणी । नमस्तस्यै नमस्तस्यै नम-

स्तस्यै नमो नमः ॥७०॥ या च कर्म्मस्वरूपेण संस्थिता जगदीश्वरी । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥७१॥ योपासनास्वरूपेण भक्तिमार्गप्रवर्त्तिका । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥७२॥ या देवी सर्व्वभूतेषु ज्ञानरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥७३॥ या तपस्या-स्वरूपेण संस्थिता तापसे जने । नमस्तस्यै नमस्त-स्यै नमस्तस्यै नमो नमः ॥७४॥ दानधर्म्मात्मिका देवी या स्थिता जगदम्बिका । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥७५॥ या च यज्ञस्वरूपेण सं-स्थिता जगदीश्वरी । नमस्तस्यै नमस्तस्यै नमस्त-स्यै नमो नमः ॥७६॥ या देवी कालिका ख्याता दुष्टा-णां कालरूपिणी । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥७७॥ ब्रह्मात्मिका च या देवी सृष्टिसम्भ-वकारिणी । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥७८॥ या जगत्पालिनी देवी वैष्णवी शक्तिरीरिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥७९॥ या जगत्प्रलये देवी रौद्री शक्तिः प्रकीर्त्तिता । नमस्तस्यै

नमस्तस्यै नमस्तस्यै नमो नमः॥८०॥ या देवी धर्म्म-
संस्थासु महामण्डलरूपिणी। नमस्तस्यै नमस्तस्यै
नमस्तस्यै नमो नमः॥८१॥ जगद्धात्रीस्वरूपेण या
स्थिता जगदम्बिका। नमस्तस्यै नमस्तस्यै नमस्त-
स्यै नमो नमः॥८२॥ रजोगुणेन सिंहेन करिणं त्वं
तमोगुणम्। आक्रम्य राजसे मातर्नमस्ते धर्मरूपि-
णि!॥८३॥ देवर्षिपितरस्सर्वे भवतीं धर्म्मरूपिणीम्।
स्तुवन्तोऽहर्निशं मातः! समन्तात् पर्य्युपासते॥८४॥
कृपामात्रेण ते मातर्जीवाः स्थावरजङ्गमाः। पन्था-
नमुन्नतेर्गन्तुं पान्थाः पाथेयनिःस्पृहाः॥८५॥ धर्म्म-
रूपे! कृपातस्ते पिण्डान् जीवा यथाक्रमम्। उद्भिज्जा-
न् स्वेदजानेत्य यान्त्यण्डजजरायुजान्॥८६॥ उन्नतिं
प्राप्नुवन्तस्ते मातर्जीवा यथाक्रमम्। कृपातस्ते
लभन्तेऽन्ते नरत्वं देवदुर्लभम्॥८७॥ नृषु यज्ञस्वरूपेण
यज्ञरूपे! त्वमम्बिके! तपोरूपेण नारीषु धर्म्मरूपे!
विराजसे॥८८॥ आर्य्यजातौ त्वमेवार्य्ये! सदाचार-
स्वरूपिणी। वर्णाश्रमस्वरूपेण त्वमेवार्य्येषु राजसे
॥८९॥ लोकत्रयपवित्रेण लोकत्रयसुपूजिते!। आर्य्ये-

नारीसतीत्वेन सति ! त्वं राजसे ध्रुवम् ॥९०॥ त्वमेव धर्म्ममार्गेषु धर्म्मरूपे ! प्रकाशसे । तपोदानस्वरूपेण यज्ञरूपेण याजिते ! ॥९१॥ सत्सामान्यविशेषाभ्यां धर्म्माभ्यां धर्म्मरूपिणी । धार्म्मिकाणाञ्च कल्याणनिःश्रेयसकरी सदा ॥९२॥ हे धर्म्मरूपे ! जगतामधीशे ! कृपाकटाक्षेण तवैव मातः ! । अनन्तब्रह्माण्डकटाहकोटि उत्पद्यते तिष्ठति लीतिमेति ॥९३॥ विकर्षणाकर्षणशक्तितोऽम्बिके ! तारग्रहोपग्रहधूमकेतवः । स्थानाच्च्यवन्ते न सतामधीश्वरि ! स्वतः स्वयं ते ननु धर्म्मरूपिणि ! ॥९४॥ यथा ज्ञानदीपो जगत्यां प्रकाशं विकासं लभेतात्मतत्त्वं जनेषु । यथा वा भवेत्त्वत्स्वरूपोपलब्धिस्तथा त्वं दयातो दयालो ! कुरुष्व ॥ ९५ ॥ सनातनस्य धर्म्मस्य पुनरभ्युदयो भवेत् । यथाशु त्वं तथा मातः ! कुरुष्वाहर्निशं शिवे ! ॥ ९६ ॥ यथा भवेच्च दुष्टानां दमनं दान्तमानसे ! । परित्राणञ्च साधूनां तथा त्वमम्बिके ! कुरु ॥९७॥ आर्य्यजातेस्त्वमेवार्य्येऽविनयं चापनोदय । लौलुप्यमिन्द्रियाणां त्वमालस्यञ्चा-

त्मनो रिपुम् ॥ ६८ ॥ शान्तं दान्तं मनो मातः ! कुरुष्व जगताञ्च मे । विषवद्विषये ज्ञानं भूयान्नो जगदम्बिके ! ॥ ६६ ॥ त्वं मातर्भारतं वर्षमार्य्यजातेश्च गौरवम् । पुरा दत्तं पुनारक्ष रक्ष रक्ष नमो नमः ॥ १०० ॥

इति श्रीधर्मसुधाकरे श्रीधर्म्मस्तवराजः ।

—o—

# श्रीधीशस्तोत्रम् ।

ऋषय ऊचुः ।

—:o:—

हे सर्वज्ञ ! जगन्निवास ! भगवन् ! देवादिदेव ! प्रभो ! हे सर्वादिगुरो ! दयार्णव ! विभो ! विश्वेश ! विश्वम्भर ! । अस्माकं भवतामपारकृपया नूनं तृतीयं वरमध्यान्तर्नयनात्मकं सुविमलं ज्ञानाद्रि प्रोन्मीलितम् ॥ १ ॥ पश्यामोऽद्य भवद्दयोदयवशाद्धारे मणीनां गणान्, सूत्रं प्रोतमिवान्तरेण निखिलब्रह्माण्डपिण्डव्रजे । सर्वेषां कुरुते

सदैकविधिनाऽनुस्यूततामाप्तवान्, चैतन्यास्तितयोर्विधानमखिलं शश्वद्भवानित्यहो ॥ २ ॥ पश्यामस्तरतो गृहेऽपरिमितान् भूयो यथाऽनन्त ! हे, रन्ध्रद्वारनिविष्टसूर्यकिरणस्तोमेष्वणूनां गणान् । ब्रह्माण्डानि तथा तरन्ति च विराड्देहाश्रितानि प्रभोर्नाद्यन्ते विपुलेऽमितानि वियति प्रोद्द्योतयन्ति ह्यमुम् ॥३॥ पश्यामश्च पुनर्वयं तव विराड्रूपं हि यत्राधुना, भात्यन्तो हरितां न चादिरपि तद्देशस्य सन्दृश्यते । पश्यामश्च पुनर्वयं तव महादेहे महाकौतुकम्, व्याप्तश्चाऽगणितैर्विराड्वपुषि ते सूर्यग्रहोपग्रहैः ॥ ४ ॥ सङ्घातप्रतिघाततः परिणमन् ब्रह्माण्डभाण्डव्रजः, ह्यन्योऽन्यं परमाणुरूपनिचयेऽनन्तो महाकाल ! हे । जायन्ते परमाणवश्च निखिला ब्रह्माण्डरूपाः पुनः, नानाकारयुताः प्रभो ! बहुविधाः प्रत्येकमेव क्षणम् ॥ ५ ॥ नक्षत्रावलिभिश्च नूनमखिलैः क्वापि ग्रहोपग्रहैः, सूर्य्याद्यैर्हि समावृताः सुसघनाः सन्तः परीणामतः । ब्रह्माण्डव्रजसम्भवक्षयविधिर्यत्र प्रभो ! भासते काले तस्य न दृश्यते कथमपि त्वादिर्न

चान्तः परम् ॥ ६ ॥ साद्धेश्चैव विराडनन्तवपुषा श्रोतौतयोस्ते तयोः, नान्तो नादिरवेद्यते किमपि चेद्देशस्य कालस्य च । द्रष्टुं तर्हि विराडनन्तवपुषः शक्तः कथं कोऽप्यहो, आदिं चान्तमशेषतः किमुत वै मूढा बताऽस्मादृशाः ॥ ७ ॥ भूतस्रष्टरु ! भूत-पालक ! सदा हे भूतहारिन् ! विभो ! अस्माभि-र्निखिलैरितीद्यत इहानन्तानि भूयोऽपि ते । ब्रह्मा-एडानि पृथक् प्रकट्य प्रकृतेः कर्मप्रवाहे पृथक्, लीयन्ते प्रकृतौ स्वयं तव मुहुः सद्यो निविष्टानि च॥८॥ जायन्ते प्रकृतेर्हि पिएडनिवहास्ते भूतभावोद्भव-कृद्रूपेण चितो जड़ेन सह यो ग्रन्थिर्विसर्गेण वै । तद्रूपा परमाणुतो ह्यगणिताः प्रत्येकतो हि स्वतः कर्मस्रोतसि ते प्रविश्य प्रकृतौ लीयन्त एवं ततः ॥ ९ ॥ पश्यामश्च भवाननन्तनयनो हे विश्वचक्षुः ! क्रमात्, पिएडौघस्य गतिं प्रपश्यति सदा ब्रह्माएड-पुञ्जस्य च । आकृष्याऽभिमुखं निजस्य नयते धर्मस्य शक्त्या च तं, दृष्ट्वा सर्वमलौकिकं हि चकिता बुद्धिर्न एतादृशम् ॥ १० ॥ पश्यामः पुनरप्यनन्त-

निखिलब्रह्माण्डपिण्डावलेः, श्रोत्रानन्त्ययुतः शृणोति सततं भूयो भवान् प्रार्थनाम्। चिच्छक्त्या चितिसंयुताश्च विदधत्तां विश्वचेतः क्रमात्, सान्निध्यं च यथोत्तरं निजमहो तस्यै दिशन् राजते ॥ ११ ॥ पश्यामश्च भवाननन्तरसनायुक्तः सुहृत्त्वं गतः, बुद्धे रूपमधिश्रितो रसमय ! ब्रह्माण्डपिण्डावलेः। मध्येऽध्यात्मपदं विविच्य परमानन्दात्मकं प्राणिनः, सर्वान् दर्शयते गुरो ! निजकृपालेशेन लोकाश्रय! ॥ १२ ॥ हे तेजोमय ! तेजसाञ्च निवहानां हे खने ! दृश्यते, त्वं स्पर्शेन्द्रियपुञ्जकुञ्जनिकरैः स्पृष्ट्वा ह्यनन्तैर्युतः। स्वैस्तेजोनिवहैरनन्तगणितब्रह्माण्डपिण्डावलिं सर्वां स्वाभिमुखं प्रकृष्य पतनाच्छश्वद्विभो ! रक्षसि ॥ १३ ॥ विश्वाधार ! च नासिकाभिरमिताभिस्त्वं युतो दृश्यसे, जिघ्रन् पुण्यसमूहगन्धमसलं ब्रह्माण्डपिण्डावलेः। अस्तित्वञ्च विलीनमेव सततं कर्तुं हि तस्या निजे, कैवल्याभ्युदयौ प्रयच्छसि यथायोग्याधिकारं प्रभो ! ॥ १४ ॥ भावातीत ! विभो ! सदा त्रिगुणतोऽतीत ! प्रभोऽनुत्तमामस्मात्पूर्वमलौ-

किकं गुणमयं भावस्वरूपं तव। रूपं सर्वमनोहरं सुविमलं दर्शेन्द्रियाप्यायकमस्माकं हि मनो व्यलीयत तदा सम्पश्यतां सत्वरम् ॥ १५ ॥ अद्यत्वे तु विराट्स्वरूपममुकं दृष्ट्वा विशालं तव, बुद्धिर्नः स्थगिता च याति चकिताऽवस्थां विलीनां पुनः। रूपं नः परिदर्शयाद्य कृपया ह्येवं विधं स्वं यतः सान्निध्यं भवतामनुत्तमहो लब्धुं वयञ्चेश्महे ॥ १६ ॥ हे सर्वेश्वर! भक्तकल्पलतिकारूप! प्रभो! पालक! रूपेणापि विवर्जितो विभुरहो भव्याय भक्तावलेः। भक्तानां प्रकृतिप्रवृत्तिजनितां स्वीकृत्य वै प्रार्थनां, कल्याणं सगुणं स्वरूपममितं साप्नोति विभ्रद्भवान् ॥ १७ ॥ विभ्राणो रविरूपमेव सवितः! भक्तान् भवांस्तेजसा, आकर्षत्यनिशं विभो! द्युतितरां कैवल्यभूमौ ध्रुवम्। हे नारायण! विष्णुरूपमभितः स्वीकृत्य चिद्भावतो, ब्रह्मीभावमिमान् निरीक्ष्य नयते तेषां क्रमेणोन्नतिम् ॥१८॥ देवीरूपमहो धरन् हि नयते धर्मस्य शक्त्या भवान्, सर्वेषां ह नियामकं परपदं हे शक्तिमन्! तान्सदा। अस्ति-

त्वस्य विधायकं च बहु सद्भावेन भक्तान्निजान्, हे शम्भो ! शिवरूपतो गमयते निःश्रेयसं निर्भयम् ॥ १९ ॥ त्वं भक्तांश्च श्रिया स्वरूपमनिशं सन्दर्श्य सिद्धेः पते ! दत्ते मुक्तिपदं परं गणपतेर्धृत्वा स्वरूपं भवान् । सर्वेषामिह वर्त्तते खलु गुरो ! ह्याद्यो गुरूणां गुरुर्देशादस्ति भवान् हि शश्वदपरिच्छिन्नस्तथा कालतः ॥ २० ॥ त्वं सर्वादिगुरुर्विभासि सकलाऽज्ञानस्वरूपे सदा, आदायर्षिगणा वयं तव विभो ! ज्ञानाब्धिविप्रुड्लवम् । ब्रह्माण्डेषु प्रवाहयाम इह वै ज्ञानप्रवाहं तथा, सर्वेष्वत्र विचक्षणा द्विजगणाः स्नात्वैव मुक्तिं ययुः ॥ २१ ॥ धारोत्पद्य हि देवनायक ! विभो ! सर्गस्थितिध्वंसकृद्विश्वव्यापककर्मणोऽपि भवतस्त्वय्येव संलीयते । सर्वे देवगणाः सदैव भवतामङ्गीभवन्तो मुदा, प्रत्येकं अनिरक्षणक्षयविधेर्ब्रह्माण्डपुञ्जेऽनिशम् ॥ २२ ॥ सामञ्जस्यमहो प्रभो ! विदधते कर्मव्यवस्थारताः, उद्भित्स्वेदजरायुजाण्डजगणा भूतव्रजाः सन्ति ये । सर्वे ते च चतुर्विधा हि मनुजानां हे प्रजानां पते ! देवानां

त्रिविधास्तथाऽसुरगणानां ये च लोका अहो ॥२३॥ त्वत्तो बुद्बुदवन्महार्णव इह त्वय्येव प्रोद्भूय ते, लीयन्ते पितरोऽपि शक्तिमतुलां त्वत्तो गृहीत्वैव च। कृत्वा मर्त्यगणोन्नतिं क्रमगतां साहाय्यमातन्वते, भूतौघस्य चतुर्विधस्य नियमे लोकव्रजस्याप्यलम् ॥ २४ ॥ तत्त्वेभ्योऽपि भवानतीतविभवो नूनं चतुर्विंशतेर्यद्यप्यस्ति तथापि धीश! नु महत्तत्त्वेऽन्तिमे प्राणिनः। नित्योऽनिर्वचनो विकाररहितो ज्ञानस्य शक्त्या स्थितः, सर्वानभ्युदयस्य दर्शयति वै मोक्षस्य मार्गं तथा ॥ २५ ॥ ये स्वातन्त्र्यमदेन मोहिततमा जीवाः प्रमादेन वै, मूढा ज्ञाननिधेस्तवेङ्गितमहो नित्यं तिरस्कुर्वते। भ्रान्ता दुःखदजन्ममृत्युगहने संसारचक्रे ध्रुवं, शंयोरभ्युदयाध्वनो हि पतिता दुःखान्यलं भुञ्जते ॥ २६ ॥ भर्गो विश्वसमर्चितं यदिह ते ह्यास्ते दयासागर! तन्नो बुद्धिमहर्निशं गणपते! शक्त्या स्वया सत्वरम्। संरुध्यासत एव कर्मनिवहात् सत्कर्मणि प्रेरयेत्, सिद्ध्याऽलङ्कृतवामपार्श्व! भगवंस्त्वां सन्नमामो वयम् ॥२७॥

इति श्रीधीशगीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे धीशर्षिसंवादे श्रीधीश-
विराड्रूपस्तुतिः ।

## श्रीगणेशस्तोत्रम् ।

सर्वे ऊचुः ।

——:o:——

यतोऽनन्तशक्तेरनन्ताश्च जीवा यतो निर्गुणा-
दप्रमेया गुणास्ते । यतो भाति सर्वं त्रिधा भेद-
भिन्नं सदा तं गणेशं नमामो भजामः ॥ १ ॥ यत-
श्चाविरासीज्जगत्सर्वमेतत्तथाब्जासनो विश्वगो वि-
श्वगोप्ता । तथेन्द्रादयो देवसङ्घा मनुष्याः सदा तं
गणेशं नमामो भजामः॥२॥ यतो वन्हिभानू भवो भूर्जलं
च यतः सागराश्चन्द्रमा व्योम वायुः । यतः स्थावरा
जङ्गमा वृक्षसङ्घाः सदा तं गणेशं नमामो भजामः
॥ ३ ॥ यतो दानवाः किन्नरा यक्षसंघा यतश्चारणा
वारणा श्वापदाश्च । यतः पक्षिकीटा यतो वीरु-
धश्च सदा तं गणेशं नमामो भजामः ॥ ४ ॥ यतो

बुद्धिरज्ञाननाशो मुमुक्षोर्यतः सम्पदो भक्तसन्तोषिकाः स्युः । यतो विघ्ननाशो यतः कार्यसिद्धिः सदा तं गणेशं नमामो भजामः ॥ ५ ॥ यतः पुत्रसम्पद्यतो वाञ्छितार्थो यतोऽभक्तविघ्नास्तथानेकरूपाः । यतः शोकमोहौ यतः काम एव सदा तं गणेशं नमामो भजामः ॥६॥ यतोऽनन्तशक्तेः स शेषो बभूव धराधारणेऽनेकरूपे च शक्तः । यतोऽनेकधा स्वर्गलोका हि नाना सदा तं गणेशं नमामो भजामः ॥ ७ ॥ यतो वेदवाचो विकुण्ठा मनोभिः सदा नेति नेतीति यत्ता गृणन्ति । परब्रह्मरूपं चिदानन्दभूतं सदा तं गणेशं नमामो भजामः ॥ ८ ॥

इति श्रीगणेशपुराणे उपासनाखण्डे
श्रीगणेशस्तोत्रम् ।

---

# श्रीशक्तिस्तोत्रम् ।

देवा ऊचुः ।

---

देवि ! प्रपन्नार्त्तिहरे ! शिवे ! त्वं वाणीमनोबुद्धिभिरप्रमेया । यतोऽस्यतो नैव हि कश्चिदीशः

स्तोतुं स्वशब्दैर्भवतीं कदाचित् ॥ १ ॥ परं मनो-
वेगविमोहिता वयं भावं भवत्या अपि वाङ्मनो-
धियाम् । अगोचरं द्योतयितुं समुद्यताः क्षमस्व
नो दोषममुं दयानिधे ! ॥ २ ॥ अत्र क्षमाप्तावपि
कारणं ते महत्यपारास्ति कृपैव मातः ! । ब्रह्म-
स्वरूपे ! जगदम्बिकेऽलं दयामयीं त्वां सततं
नमामः ॥ ३ ॥ परात्परा त्वं परतत्त्वरूपिणी
स्वतीत्य तत्त्वान्यखिलानि राजसे । सच्चित्त्वसाहा-
य्यत आत्मना पुनर्दाम्पत्यरूपं युगलञ्च बिभ्रती
॥ ४ ॥ तनोषि शृङ्गारमयीं समन्ताल्लीलाललामा-
न्वितसृष्टिमेताम् । स्वानन्दसन्दोहभरप्रकाशामना-
द्यनन्तां जगदम्बिकेऽलम् ॥ ५ ॥ लीलोदयास्ते
भवतो भवत्या अक्षीङ्गितैः केवलमेव मातः ! । नाना-
विधस्यामितसङ्ख्यकस्य ब्रह्माण्डसङ्घस्य च
देवि ! मन्ये ॥ ६ ॥ सर्गस्थितिप्रत्यवहारकार्य्यं
भवद्विलासस्य तरङ्गमात्रम् । कर्तुं क्षणेनाखिल-
मस्यलं त्वं नमोऽस्त्वतस्तेऽखिलशक्तिरूपे ! ॥ ७ ॥
त्वं निर्गुणाकारविवर्जिताऽपि त्वं भावराज्याञ्च

बहिर्गतापि । सर्वेन्द्रियागोचरतां गतापि त्वेका ह्यखण्डा विभुरद्वयाऽपि ॥ ८ ॥ स्वभक्तकल्याण-विवर्द्धनाय धृत्वा स्वरूपं सगुणं हि तेभ्यः । निःश्रेयसं यच्छसि भावगम्या त्रिभावरूपे ! भवतीं नमामः ॥ ९ ॥ नास्त्यम्ब ! सीमा तव सत्कृपायाः शक्ता न ये भक्तगणास्त्वदीयाः । तत्त्वप्रबोधस्य प्रपूर्त्यभावाद्द्रष्टुं हि ते भावमयस्वरूपम् ॥ १० ॥ स्वाभाविकैरेव कृपाकटाक्षैः समीहमाना ह्यनुकम्पितुं तान् । गुणाश्रयाद्यच्छसि दर्शनं स्वं मुक्तिञ्च तेभ्योऽभ्युदयं ददासि ॥ ११ ॥ ज्ञातुं न शक्तास्तव देवि ! तत्त्वं वयं न दैत्या अपि मानवाः के । परात्परे ! त्वाञ्च दयाम्बुराशे ! वयं नमामस्त्रिगुणस्वरूपे !॥१२॥ किं वर्णनं तेऽस्ति कृपाम्बुराशेर्येऽज्ञानपाशैर्जड़िता विमुग्धाः । मातर्महत्त्वं परमाद्भुतं ते किमप्यहो नैव विदन्ति भक्ताः ॥१३॥ अनन्यभक्त्यैव तु केवलं हि भृङ्गायमाणास्तव पादपद्मे । विच्योतयस्यम्ब ! न तानपि त्वं स्वदर्शनान्मोक्षखनेः कदापि ॥ १४ ॥ श्रीविष्णुगौरीशिवधीशसूर्य्यरूपा-

सु पञ्चात्मकदेवतासु । यथारुचि त्वं प्रकटत्वमेत्य स्थूलासु तान् वै कुरुषे कृतार्थान् ॥१५॥ दैवेषु राज्येषु यदा कदाचिद् घोरेण देवासुरसङ्गरेण । उत्तिष्ठते धार्म्मिकविप्लवौघो दयामयि ! त्वञ्च तदैव नूनम् ॥१६॥ मातर्जगन्मङ्गलमाशु कर्त्तुमाकृष्य तेजांस्यमलानि नोऽलम् । तैरेव सन्दीपितदिक्समूहैः स्थूलं स्वरूपं विमलं दधाना ॥ १७ ॥ हत्वाऽसुरांस्तान् कुरुषे व्यवस्थां दैवाधिराज्यस्य विशालसीम्नः । एवं कदाचित् किल मर्त्यलोके धर्म्मस्य जाते बहुविप्लवे हि ॥१८॥ विभिन्नजीवेष्ववतीर्य्य मातर्हठाद्सा धूर्निखिलान्निहत्य । साधूनवन्ती पुनरेव धर्मराज्यं सुसंस्थापयसे तदा त्वम् ॥१९॥ देशो यदा ह्रासमुपैति तं त्वं नेतृस्वरूपे ह्यवतीर्य्य पासि । विष्णवादिपञ्चात्मकदेवरूपे ! वयं नमामो रणचण्डिके ! त्वाम् ॥२०॥ त्वं सच्चिदानन्दमये स्वकीये ब्रह्मस्वरूपे निजविज्ञभक्तान् । तथेशरूपे च विधाप्य मातरुपासकान् दर्शनमात्मभक्तान् ॥२१॥ निष्कामयज्ञावलिनिष्ठसाधकान् विराट्स्वरूपे च विधाप्य

दर्शनम् । श्रुतेर्महावाक्यमिदं मनोहरं करोष्यहो "तत्त्वमसीति" सार्थकम् ॥२२॥ मन्त्रावलीनां दृढ़-सेतुभूते ! सृष्ट्यादिजाते ! प्रभवे ! श्रुतीनाम् । अनाद्यनन्तेऽखिलगे ! प्रणम्ये ! नमो भवत्यै प्रणव-स्वरूपे ! ॥ २३ ॥ ज्ञानस्य साम्राज्यमृषिप्रकाण्डै-रस्माभिरम्बाखिलकर्मराज्यम् । स्थूलं स्वराज्यं पितृभिश्च नूनं दत्वाथ संरक्षयसे स्वशक्तिम् ॥२४॥ अव्यक्तरूपेऽखिलशक्तिशोभे ! व्यक्तेऽगुणे ! त्वं सगुणेऽसि मातः ! । विमोहिनी जीवततेरविद्या विद्याऽपि कैवल्यप्रदा त्वमेव ॥२५॥ नित्यं तुरीया-स्पदसम्प्रतिष्ठाविधायिनी ब्रह्ममयी त्वमेव । स्वाहास्वधाकारवषट्स्वरूपे ! हे देवमातर्भवतीं नमामः ॥ २६ ॥ त्वमेव मातः ! प्रतिकल्पमेव सरस्वतीरूपमहो दधाना । स्वाध्यात्मशक्त्यर्षिप्रशान्तचित्तमाविर्विधत्से च प्रणोद्य वेदान् ॥ २७ ॥ वेदेषु संस्थापयसेऽथ मन्त्रशक्तिं हि गायत्र्यधिरूपतस्त्वम् । त्वमेव सावित्र्यधिरूपतश्च यज्ञक्रिया-शक्तिमथो वितन्य ॥२८॥ तत्साधकेभ्यो मनुजेभ्य

आशु निःश्रेयसञ्चाभ्युदयं ददासि। अतो वयं ज्ञानप्रदेऽति नम्राः हे वेदमातर्भवतीं नमामः ॥२६॥

इति श्रीशक्तिगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे महादेवीदेवसंवादे श्रीशक्तिस्तोत्रम्।

——:o:——

## श्रीनवरत्नमालिका।

ॐकारपञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम्। आगमविपिनमयूरीमार्यामन्तर्विभावये गौरीम् ॥१॥ अरुणाधरजितबिम्बां जगदम्बां गमनविजितकादम्बाम्। करुणायतसुकदम्बां पृथुलनितम्बां भजे सहेरम्बाम् ॥ २ ॥ श्यामलिमसौकुमार्यां सौन्दर्यानन्दसम्पदुन्मेषाम्। तरुणिमकरुणापूरां मदजलकल्लोललोचनां वन्दे ॥ ३ ॥ दयमानदीर्घनयनां देशिकरूपेण दर्शिकाभ्युदयाम्। वामकुचनिहितवीणां वरदां सङ्गीतमातृकां वन्दे ॥ ४ ॥ नतजनरक्षादीक्षां रक्षां प्रत्यक्षदेवताध्यक्षाम्। वाहीकृतहर्यक्षां क्षपति-

विपद्वां सुरेषु कृतपद्माम् ॥५॥ वीणारसानुषङ्गं विकचकचामोदमाधुरीभृङ्गम्। करुणापूरतरङ्गं कलये मातङ्गकन्यकापाङ्गम् ॥ ६ ॥ स ऋ ग म प ध नि सा तान्तां वीणासंक्रान्तकान्तहस्तां ताम्। शान्तां मृदुलीस्वान्तां कुचभरतान्तां नमामि शिवकान्ताम् ॥ ७ ॥ अवटुतटघटितचूलीं ताड़िततालीं पलाशताटङ्काम्। वीणावादनवेलाकम्पितशिरसां नमामि मातङ्गीम् ॥ ८ ॥ नखमुखमुखरितवीणास्वादननवनवोल्लासम्। मुखमम्ब! मोदयतु मां मुक्ताताटङ्कमुग्धहसितं ते ॥ ९ ॥

इति श्रीमच्छङ्कराचार्य्यविरचितं श्रीनवरत्नमालिकास्तोत्रम्।

---

# श्रीशक्तिस्तवराजः।

देवा ऊचुः

मातर्वयं विस्मयमावहामः मोदे कदाचित् नितरां पतामः। क्षणे परे साध्वसमाश्रयामो यदेक-

शक्त्या प्रकटत्वमेत्य ॥१॥ त्वं वाङ्मनोबुद्धिभिरप्र-
मेया सुखं धरन्ती दशसंख्यकाभिः। अनाद्यनन्ता-
भिरहो दिशाभिर्विभासि पूर्णं किल देशरूपम् ॥२॥
स्वस्याश्च मन्ये स्वयमेव शक्तेराद्यन्तशून्यं जनक-
स्वरूपम्। मातर्महाकालममुं जनित्वा सार्द्धं च
तेनैव विहर्त्तुमुत्का ॥ ३ ॥ अनाद्यनन्तं तव देवि!
रूपद्वयं महाकालसुदेशरूपम्। वाणीमनोबुद्धि-
बलाद्तीतं मन्यामहेऽस्तीति विभुस्वरूपम् ॥ ४ ॥
अनाद्यनन्तौ किल कालदेशौ व्याप्तस्य नूनं प्रति-
रामकूपम्। विराट्शरीरस्य तवैव भान्ति ब्रह्माण्ड-
सङ्घा अमिता महान्तः ॥ ५ ॥ ब्रह्माण्डप्रत्येक
प्रवन्धमध्ये पश्याम आत्मानमहो पृथक् पृथक्।
दृष्टिर्न सर्वत्र न पति यद्यपि परन्तु यत्रैव समेति
तत्र हि ॥ ६ ॥ ब्रह्माण्डसङ्घान्यतमे पुनर्वयं ब्रह्मा-
णमीशञ्च हरिञ्च देवान्। सर्गस्थितिप्रत्यवहार-
सक्तान् पृथक् पृथक् तानवलोकयामः ॥ ७ ॥ ब्रह्मा-
ण्डमेकैकमहो विशालं भूतव्रजानाञ्च चतुर्विधा-
नाम्। आच्छादितं खल्वमितैश्च पिण्डैः प-

श्याम आश्चर्यमयं विचित्रम् ॥ ८ ॥ ब्रह्माण्डसङ्घे-ष्वखिलेषु मातः! दृष्ट्वा च देवर्षिपितॄननेकान्। तथा च नानाविधमर्त्यवर्गान् पृथक्तया नश्च-किताऽस्ति बुद्धिः ॥ ९ ॥ यदा तु संख्यातुमर्हो न शक्यते अनाद्यनन्ते वपुषि स्थितस्तव। ब्रह्माण्ड-सङ्घोऽपि तदाऽस्ति का कथा पिण्डव्रजस्यामित-केन्द्रभाजिनः ॥ १० ॥ ब्रह्माण्डप्रत्येकविभागमध्ये सूर्य्याग्निचन्द्रात्मकमस्ति मातः!। नेत्रत्रयं ते विमलं विशालं त्वं येन दृष्ट्वा हरसि त्रितापम् ॥११॥ व्याप्नोति मूर्द्धा तव चोर्द्ध्वलोकमधःस्थलोकश्चर-णद्वयं ते। ब्रह्माण्डसङ्घस्य हि तस्य यावदाकाश-मास्ते तव कर्णपुञ्जः ॥१२॥ त्वचो हि यावत्पवनं त्वदीयाश्चक्षुर्व्रजस्तेऽस्ति च यावदग्निः। यावज्जलं ते रसना रसज्ञा यावत्क्षितिः घ्राणसमूह आस्ते ॥ १३ ॥ अतश्च मातस्त्वमनन्तकर्णा ह्यसंख्यक-त्वग्भिरथावृताऽसि। अनन्तनेत्राऽमितलोलजिह्वा त्वनन्तनासा स्वत एव भासि ॥ १४ ॥ आन-न्त्यहेतोश्च दिशां दशानामनन्तपादा त्वमनन्त-

वाहुः । अस्माकमम्ब ! त्वमनन्तरूपा नेत्रावलीगो-
चरतामुपैषि ॥ १५ ॥ विराड्वपुस्ते प्रसमीक्ष्य
मातः ! अनन्तमाश्चर्य्यमयं मनो नः । विमुह्यते
धीः स्थगिता च नोऽस्ति सर्वेन्द्रियौघः शिथिला-
यते च ॥ १६ ॥ त्वद्दत्तनेत्रैश्च विलोकयामो ह्यगाध-
शक्तेर्जगदम्बिके ! ते । नादिर्न चान्तो न च मध्यम-
स्ति विद्मो वयं त्वां धृतशक्तिसङ्घाम् ॥ १७ ॥
सशक्तिशक्त्योर्न च भेदकल्पना भवत्यहो कापि
सुधीरसंसदि । तवैव शक्तेश्च विलासमात्रतां
विराड्वपुस्ते वहते निरन्तरम् ॥ १८ ॥ ईक्षामहेऽ-
द्धाऽखिलविश्वमातः ! यत् सच्चिदानन्दमयस्वरू-
पात् । केन्द्रान्स्वतो भावमयाद्भवत्या उत्पद्य
शक्तिः किल चिन्मयीयम् ॥ १९ ॥ चतुर्दशाहो
भुवनानि यत्र विभान्त्यनेकानि महान्ति तस्य ।
ब्रह्माण्डसङ्घस्य करोति नित्यं सर्गस्थितिप्रत्यव-
हारकार्य्यम् ॥ २० ॥ तत्राप्यनन्तान्किल जीवपि-
ण्डांश्चतुर्विधैर्भूतगणैस्सुयुक्तान् । अनेककेन्द्रेषु
पृथक्विभक्तान् विलापयन्ती जनयन्त्यवन्ती ॥२१॥

हठादसंख्यान्स्वत एव जीवान् वध्नात्यविद्यादृढपाश-
बन्धैः । भूयस्ततस्तानपि पाशबद्धान् विद्याप्रदानेन
करोति मुक्तान् ॥ २२ ॥ पुनश्च तान्पाश-
विमुक्तजीवान् सम्मेल्य नैजे परमस्वरूपे ।
ब्रह्मप्रमोदे सुनिमज्जयन्ती ततश्च तान्दर्शयते स्वरू-
पम् ॥२३॥ शक्तिर्यतः सा प्रकटत्वमेत्य त्वनन्तवैचि-
त्र्यमयं स्वरूपम् । धरन्त्यसंख्यं विविधञ्च मातः !
एकाऽद्वितीयं पुनरेति रूपम् ॥ २४ ॥ एकाऽद्वितीयं
सुविधृत्य रूपं लिनाति तत्र प्रभवे स्वकीये । अस्याश्च
शक्तेर्न रहस्यमेतद्विद्मो वयं मूर्छति धीर्हि नोऽद्य ॥२५॥
तवैव शक्तिश्च बिभर्ति दैवं राज्यं सुसूक्ष्मं जगद-
म्बिके ! नः । स्थूलं हि लोकं किल मानवानाम्बिभर्ति
नित्यं सचराचरञ्च ॥ २६ ॥ ब्रह्माण्डपिण्डेषु चतु-
र्दशैव व्याप्तान्यहो यद्भुवनानि भान्ति । तच्छक्तिपु-
ञ्जस्य परात्परस्य विलासमात्राणि च केवलानि ॥२७॥
एकाऽद्वितीया तव शक्तिरम्बिके ! स्थूलञ्च सूक्ष्मञ्च
नु कारणञ्च नः । रूपं धरन्ती परिदर्शयत्यहो
अनाद्यनन्तं सुविराड्वपुस्तव ॥ २८ ॥ मातस्त-

वानन्तमुखीमनन्तनेत्रामनन्तश्रुतिशीर्षजुष्टाम् । अनन्तनासोदरवाहुपादां धीनों विराड्मूर्तिमभीक्ष्य सन्ना ॥ २९ ॥ विराड्रूपं दिव्यं प्रतिपलमहो देवजननि ! वयं नैवालं तेऽनुभवितुमदो विस्मयकरम् । यतो रूपं दृष्ट्वाऽद्भुतमतिविशालञ्च नितरां, धियो मूर्च्छां भेजुः किमुत मन आदीन्द्रियगणः ॥ ३० ॥ कृपां कृत्वाऽतोऽस्मानतितरमनोज्ञं सुखकरं प्रदर्श्य स्वं रूपं ह्युपदिश तदेवं त्वमधुना । प्रपञ्चे दृश्येऽनुक्षणमथ वयं येन भवतीमलं द्रष्टुं देशे निखिलसमये पात्रनिवहे ॥ ३१ ॥ वयं देवि ! त्वत्तो यदधिकतरं साग्रहमिति जनन्युक्तं कुर्मो विनयमति तत्कारणमहो । असामर्थ्यं नूनं भगवति ! विजानीत च ततः, क्षमस्व प्रागल्भ्यं विहितमधुना यद्भ्रमवशात् ॥ ३२ ॥

इति श्रीशक्तिगीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे महादेवीदेवसंवादे
श्रीशक्तिविराड्रूपस्तुतिः ।

# श्रीभगवतीस्तुतिः ।

जय जननि भ्रमजालनिवारिणि गीतविनोदि-
निताललये, विविधवरोहणमूर्च्छनमोहिनि हे
परमेश्वरि हे विजये । निखिलचराचरभूतविभा-
विनि पिण्डसमष्टिसरूपचये, अनुपलमेव मनो मननं
तव भक्तिरसस्य करोतु जये ॥१॥ अयि मन एष भवो
विभवे वरिवर्त्ति यदीयसरूपमये, वरमनुरूपमसि
त्वमपि प्रभु यत्स्थिति भाति मुदानिचये । भ्रमसि
भवे भ्रमतो निजरूपनिरन्तर विस्मरणेन शये, अनुप-
लमेव मनो मननं तव भक्तिरसस्य करोतु जये॥२॥पुरु-
षप्रधानतया जगतीगतदम्पतियुग्मविहारनये, निर-
ततमा नितरामति सैव विलासिनि रासविलासकले ।
अखिलनिरञ्जनसत्यसनातनरूपमयी मम सा विषये,
अनुपलमेव मनो मननं तव भक्तिरसस्य
करोतु जये॥३॥ सरभसप्रेमपयोधिनिमज्जनलब्धरसा-
मृतपानमये, पुलकितमानसभृङ्गयदीयसुभक्तगणो

ननु भक्तिरये । गुणगणगानपरो मुदमातनुते स्वरस-
स्तकतानलये, अनुपलमेव मनो मननं तव भक्ति-
रसस्य करोतु जये ॥४॥ परमपिता जननी जगतां भव-
तोह निदानमपि प्रलये, भवभवभूतिनिदानमलं भवर-
त्तणसाक्षिणि कालभये । वितथविनाशिनि पापवि-
मोचिनि भीतिनिवारिणि मातरये, अनुपलमेव
मनो मननं तव भक्तिरसस्य करोतु जये ॥५॥ निखिल-
चराचरभूतविधायिनि भूतमहेश्वरि भूतधये,
जनमनआन्तरप्राणसरूपिणि योगनिरूपिणि योग-
मये । स्वजनविनोदिनि भक्तजनस्य सदा हृदया-
म्बुजकोशशये, अनुपलमेप मनो मननं तव भक्ति-
रसस्य करोतु जये ॥६॥ अखिलचराचरगामिनि
साधकसाधनसाध्यसुसिद्धिमये, सरसमनोहर-
रूपविलासविलोकनजातललामतमे । ऋषिमुन-
यस्तव दर्शनमद्भुतमाशु नयन्ति समाधिलये, अनु-
पलमेव मनो मननं तव भक्तिरसस्य करोतु जये ॥७॥
अनृतदृढं भ्रमजालमिदं मन आशु विदित्वा छिन्धि
भये, न पत निरन्तरमेव विलोकय रूपवरेऽखिल-

विश्वमये । बहुविधरूपविवर्जितमां परमां प्रथितां निजरूपमये, अनुपलमेव मनो मननं तव भक्तिरसस्य करोतु जये ॥ ८ ॥

इति श्रीजातीयमहायज्ञसाधने
श्रीभगवतीस्तुतिः ॥

---

# श्रीभुवनेश्वरीस्तोत्रम् ।

———:o:———

अथानन्दमयीं साक्षाच्छब्दब्रह्मस्वरूपिणीम् । ईडे सकलसम्पत्त्यै जगत्कारणमम्बिकाम् ॥ १ ॥ आद्यामशेषजननीमरविन्दयोनेर्विष्णोः शिवस्य च वपुःप्रतिपादयित्रीम् । सृष्टिस्थितिक्षयकरीञ्जगतां त्रयाणां स्तुत्वा गिरं विमलयाम्यहमम्बिके ! त्वाम् ॥ २ ॥ पृथ्व्या जलेन शिखिना मरुताऽम्बरेण होत्रेन्दुना दिनकरेण च मूर्त्तिभाजः । देवस्य मन्मथरिपोरपि शक्तिमत्ताहेतुस्त्वमेव खलु पर्वतराजपुत्रि ! ॥ ३ ॥ त्रिस्रोतसः सकललोकसमर्चि-

तायां वैशिष्ट्यकारणमवैमि तदेव मातः ! । त्वत्पादपङ्कजपरागपवित्रितासु शम्भोर्जटासु सततं परिवर्त्तनं यत् ॥ ४ ॥ 'आनन्दयेत्कुमुदिनीमधिपः कलानां नान्यामिनः कमलिनीमथ नेतरां वा । एकस्य मोदनविधौ परमेकमीष्टे त्वञ्च प्रपञ्चमभिनन्दयसि स्वदृष्ट्या ॥ ५ ॥ आद्याऽप्यशेषजगतां नवयौवनाऽसि, शैलाधिराजतनयाऽप्यतिकोमलाऽसि । अय्याः प्रसूरपि तया न समीक्षिताऽसि ध्येयाऽसि गौरि ! मनसो न पथि स्थिताऽसि ॥६॥ आसाद्य जन्म मनुजेषु चिराद्दुरापं तत्राऽपि पाटवमवाप्य निजेन्द्रियाणाम् । नाभ्यर्चयन्ति जगतां जनयितृ ! ये त्वां निश्रेणिकाग्रमधिरुह्य पुनः पतन्ति ॥७॥ कर्पूरचूर्णहिमवारिविलोड़ितेन ये चन्दनेन कुसुमैश्च सुजातगन्धैः । आराधयन्ति हि भवानि ! समुत्सुकास्त्वां ते खल्वखण्डभुवनाधिभुवः प्रथन्ते ॥८॥ आविश्य मध्यपदवीं प्रथमे सरोजे सुप्ताऽहिराजसदृशी विरचय्य विश्वम् । विद्युल्लतावलयविभ्रममुद्वहन्ती पद्मानि पञ्च विदलय्य खमश्नुवाना ॥९॥

तन्निर्गतामृतरसैरभिषिच्य गात्रं मार्गेण तेन विलयं पुनरप्यवाप्ता। येषां हृदि स्फुरसि जातु न ते भवेयुर्मातर्महेश्वरकुटुम्बिनि! गर्भभाजः ॥ १० ॥ आलम्बिकुन्तलभरामभिरामवक्त्रां आपीवरस्तनतटीं तनुवृत्तमध्याम्। चिन्ताक्षसूत्रकलशालिखिताढ्यहस्ताम् मातर्नमामि मनसा तव गौरिमूर्त्तिम् ॥११॥ आस्थाय योगमविजित्य च वैरिषट्कमाबध्य चेन्द्रियगणं मनसि प्रसन्ने। पाशाङ्कुशाभयवराढ्यकरां सुवक्त्रां, आलोकयन्ति भुवनेश्वरि! योगिनस्त्वाम् ॥ १२ ॥ उत्तप्तहाटकनिभा करिभिश्चतुर्भिरावर्त्तिताऽमृतघटैरभिषिच्यमाना। हस्तद्वयेन नलिने रुचिरे वहन्ती पद्माऽपि साभयवरा भवसि त्वमेव ॥ १३ ॥ अष्टाभिरुग्रविविधायुधवाहिनीभिर्दोर्वल्लरीभिरधिरुह्य मृगाधिराजम्। दूर्वादलद्युतिरमर्त्यविपक्षपक्षान् न्यक्कुर्वती त्वमसि देवि! भवानि! दुर्गे!॥१४॥ आविर्निदाघजलशीकरशोभिवक्त्रां गुञ्जाफलेन परिकल्पितहारयष्टिम्। पत्रांशुकामसितकान्तिमनङ्गतन्द्रां आद्यां पुलिन्द-

तरुणीमसकृन्नमामि ॥ १५ ॥ हंसैर्गतिक्वणितनूपुर-
दूरकृष्टेः मूर्त्तैरिवाप्तवचनैरनुगम्यमानौ । पद्माविवोर्द्ध्वमुखरूढसुजातनालौ श्रीकण्ठपत्नि ! शिरसैव दधे तवाङ्घ्री ॥१६॥ द्वाभ्यां समीक्षितुमतृप्तिमतेव दृग्भ्यामुत्पाद्य भालनयनं वृषकेतनेन । सान्द्रानुरागतरलेन निरीक्ष्यमाणे जङ्घे उभे अपि भवानि ! तवानतोऽस्मि ॥ १७ ॥ ऊरू स्मरामि जितहस्तिकरावलेपौ स्थौल्येन मार्दवतया परिभूतरम्भौ । श्रोणीभरस्य सहनौ परिकल्प्य दत्तौ स्तम्भाविवाङ्ग ! वयसा तव मध्यमेन ॥१८॥ श्रोण्यौ स्तनौ च युगपत् प्रथयिष्यतोच्चैर्बाल्यात्परेण वयसा परिकृष्टसारः । रोमावलीविलसितेन विभाव्यमूर्त्तिर्मध्यं तव स्फुरतु मे हृदयस्य मध्ये ॥१९॥ सख्या स्मरस्य हरनेत्रहुताशभीरोः लावण्यवारिभरितं नवयौवनेन । आपाद्य दत्तमिव पल्वलमप्रधृष्यं नाभिं कदापि तव देवि ! न विस्मरेयं ॥ २० ॥ ईशापगेहपिशुनं भसितं दधाने काश्मीरकर्दममनुस्तनपङ्कजे ते । स्नानोत्थितस्य करिणः क्षणलक्षफेनौ

सिन्दूरितौ स्मरयतः समदस्य कुम्भौ ॥२१॥ कण्ठा-
तिरिक्तगलदुज्ज्वलकान्तिधाराशोभौ भुजौ निजरि-
पोर्मकरध्वजेन। कण्ठग्रहाय रचितौ किल दीर्घपाशौ
मातर्मम स्मृतिपथं न विलङ्घयेताम् ॥२२॥ नात्यायतं
रुचिरकम्बुविलासचौर्य्यं भूषाभरेण विविधेन
विराजमानम्। कण्ठं मनोहरगुणं गिरिराजकन्ये!
संचिन्त्य तृप्तिमुपयामि कदापि नाऽहम्॥२३॥ अत्या-
यतात्नमभिजातललाटपट्टं मन्दस्मितेन दरफुल्ल-
कपोलरेखम्। बिम्बाधरं वदनमुन्नतदीर्घनासं यत्ते
स्मरत्यसकृदम्ब! स एव जातः॥२४॥ आविस्तुषार-
करलेखमनल्पगन्धपुष्पोपरिभ्रमदलिव्रजनिर्विशेषम्।
यश्चेतसा कलयते तव केशपाशं तस्य स्वयं गलति
देवि! पुराणपाशः॥२५॥ श्रुतिसुरचितपाकं धीम-
तां स्तोत्रमेतत् पठति य इह मर्त्यो नित्यमार्द्रान्त-
रात्मा। स भवति पदमुच्चैः सम्पदां पादनम्र-
क्षितिपमुकुटलक्ष्मीलक्षणानां चिराय॥ २६॥

इति श्रीभुवनेश्वरीस्तोत्रम्।

———:C:———

# श्रीशम्भुस्तुतिः ।

———:०:———

पितर ऊचुः ।

अहो विस्मृतात्मान आश्चर्य जाताः परात्मन् ! वयं नैव विद्मोऽत्र हेतुम् । भवांश्चिन्मयस्येह वीजस्य दातृ ! धरन् लिङ्गरूपं विराड्विश्वयोनौ॥१॥ समालोक्यते सम्प्रवेशम्प्रकुर्वन्, पुनर्लिङ्गपीठद्वयं दृश्यते च । धरन्वैकयुग्मस्वरूपं मनोज्ञं, समाच्छादयद्विश्वमेतत्समस्तम् ॥ २ ॥ समालोक्यतेऽस्माभिरित्यत्र भूयो भवच्चिन्मयाद्वैतलिङ्गादतीतम् । अहो नोऽपरं वस्तु कुत्रापि किञ्चित्, कथञ्चिन्न चक्षुःपथं नूनमेति ॥३॥ अहो ! सर्वसाक्षिन् ! विभो ! विश्वयोन्या, प्रकृत्या पुनर्विश्वसृष्टेरिहादौ । तथान्ते भवल्लिङ्गसँल्लीनयैव पुरोद्योत्यते चिन्मयोऽद्वैतभावः ॥ ४ ॥ महादेव ! पश्याम आद्यन्तशून्ये, पृथक्तेऽत्र लिङ्गे पृथक् यत्र तत्र । अनन्तेषु केन्द्रेषु पार्थक्यतो हि, जगत्सृष्टिरक्षालयान् कुर्वतोऽलम् ॥ ५॥ अनेकान् विधींश्चैव विष्णू-

न्महेशान्, निरीक्षामहे विश्वगोलव्रजञ्च। पुनर्भूषितं विश्वमूर्तेऽत्र लिङ्गे, अनेकैरहो! भग्रहोपग्रहैश्च- ॥६॥ अहो सर्वसाक्षिन्! कियन्त्यत्र लिङ्गे, समं विश्वगोलानि जायन्त आद्ये। कियन्त्यासते च प्रलीयन्त आशु, निमग्नान्यमुष्मिन् कियन्ति प्रभो! ते॥७॥ निरीक्षामहेऽनन्त! भूयो वयं यदनेके हि जिज्ञासवो देवसङ्घाः। महर्षिव्रजास्तस्य लिङ्गस्य चादिं, प्रवृत्ताः समन्वेष्टुमन्तं परन्तु ॥८॥ न चादिं न चान्तं समासाद्य तस्य, त्वयं वर्तते नूनमाद्यन्तशून्यः। विराड् विश्वयोनौ प्रविष्टो हि लिङ्गः स्वसिद्धान्तमित्येव कुर्वन्ति मुग्धाः ॥९॥ प्रभो! शब्दजातादतीताखिलात्मन्! निरीक्षामहे ते पुनस्तत्र लिङ्गे। विराजत्स्वनेकेषु लोकेषु सिद्धा महर्षिव्रजास्त्वाञ्च शब्दैः प्रणोतुम् ॥१०॥ यतन्ते सदा वैदिकैर्लौकिकैश्च, परञ्चैव वाचस्तथा शब्दपुञ्जात्। अतीतो भवान् वर्ततेऽतः स्वयं ते ह्यवाचः क्षणात्स्युः सुमूकाश्च सन्नाः ॥११॥ विभो! ते महेशान! लिङ्गं विराजं निमग्ना वयं विस्मयाब्धौ निरीक्ष्य। अहो दृश्यते ते विराडेष लिङ्गो, दशायां

हि सृष्टेर्विभुर्व्योममध्ये॥१२॥प्रभो!ओतप्रोतो ह्यनाद्यन्त-भावं, तवाऽऽदर्श्य बुद्धिं विधत्ते विमूढ़ाम्, सदाऽस्मा-कमेवं मनोमूर्छितञ्च, ह्यतो नो न वाचः स्फुटं निस्सरन्ति॥१३॥ तथेद्यामहे तस्य सृष्टेरतीतदशायां सदा देशतः कालतश्च । अवस्थापरिच्छिन्नभावं गताऽलं प्रभोऽद्वैतभावं सदा द्योतयेन्नु॥१४॥ अवस्थां तदेमामवेद्येह नोऽलं, लयं याति शीघ्रं मनः सेन्द्रि-यं हि । तथाऽस्माकमुत्सृज्य बुद्धिः स्वयञ्च, दशां त्रैपुटीं सत्वरं सँल्लिनाति॥१५॥ अहो कारणानां प्रभो ! कारणात्मन्! विभो ! याति लिङ्गे यदा चिन्मये ते । लयं विश्वगोलव्रजो दीप्यमानस्तदालोक्यते कौतुकं तत्र चित्रम्॥१६॥ विभु व्योम भूतानन्तरं सर्वमेव, सलीलं स्वलीनं विधाय स्वयञ्च । विलीयाम्बुधौ देशकालस्वरूपे, सदेशं सकालं सदेत्थं निमग्नम्॥१७॥ भवत्यस्य लिङ्गस्य कस्मिन्प्रदेशे, यथा तस्य सत्तानु-भूतिः कथञ्चित् । न सन्तिष्ठते क्वापि नूनं कुतश्चित्, परात्मन्! प्रभो! नाथ! शम्भो ! दयालो॥१८॥ विभो! विश्वगोलप्रकाण्डा अनन्ता, अहो चिन्मये तत्र लिङ्गे

विराजि। अनेकैः सहैवाखिलाधाररूप! पितृव्रात-देवव्रजर्ष्योघकैर्हि ॥ १६ ॥ अनन्तैर्मनुष्यासुरैर्भूत-सङ्घैश्चतुर्धा विभक्तैः प्रतीयन्त इत्थम्। यथा चित्रिता मूर्तयः स्तम्भमध्ये विचित्रा विचित्रेऽश्मभिर्निर्मितेऽलम् ॥२०॥ प्रभो! सन्ति ता मूर्तयः प्रस्तरेषु सदाऽऽलेख्यभावं गता केवलं हि। नचान्यत्परं वर्त्तते तत्र किञ्चित् अहो वस्तुतो ज्ञानसिन्धो! दयालो! ॥२१॥ अनन्ताऽमिता विश्वगोलव्रजा हि विराजन्त एवं-विधास्तत्र लिङ्गे। परं सोऽपि लिङ्गस्तु निर्लिप्त एव प्रतीयेत तैर्नात्र सन्देहलेशः ॥ २२ ॥ नचादिर्नचान्तोऽस्ति लिङ्गस्य तस्य समस्तेश! सर्व-स्वरूप! प्रभो! भोः!। भवच्चिन्मयो वर्त्तते लिङ्ग एषः सदान्तर्बहिः पूर्ण एवं भवन्वै ॥२३॥ अहो देशकालाऽपरिच्छिन्न आरादनाद्यन्तरूपेण पूर्णः परात्मन्!। निरीक्ष्येत नूनं सदा सर्वतो हि न चास्तेऽत्र सन्देह-लेशः कथञ्चित् ॥ २४ ॥ प्रदर्श्य प्रदर्श्य सदा लिङ्गमेनं विराण्मूर्त्तिभृत्! ज्ञाननेत्रस्य नोऽलम्। त्वमत्वं यदा दूरदृष्टेर्विनश्येत् तदैकापरूपं प्रदर्श्येत

रूपम् ॥२५॥ यदा ते दयासागरैतद्विचित्रं मनोबुद्धिवाग्वैभवातीतलिङ्गम् । समालोक्य किंकार्य्यमूढाः स्वचित्तैः किमप्याश्रयामस्तदेवामहेऽन्यत् ॥२६॥ लिनातीह शब्देऽखिला स्थूलसृष्टिः स्वराः षड्जनामादयः सप्त चैवम् । सदोङ्कारशब्देऽद्वितीये लिनन्ति अविच्छिन्न आस्ते यथा तैलधारा ॥२७॥ यथा दीर्घघण्टानिनादोऽस्ति यस्तु सदैकेन भावेन युक्तस्तथैव । समुत्पादकोऽस्त्येकतत्त्वस्य सोऽयं भवानासने प्रणवे तत्र भाति ॥२८॥ अनन्तात्मकस्ते जटा दिक्समूहः त्रिकालात्मकन्ते विशालं त्रिनेत्रम् । अनन्तो विभुर्वर्त्तते ते दयालो ! सुयज्ञोपवीतं पवित्रं मनोज्ञम् ॥२९॥ लयस्थानभूतोऽपि विश्वस्य देव ! भवान् भूषिताङ्गो विभूत्या विभाति । चतुर्हस्तमध्येऽस्त्यहो खर्परस्ते त्रिशूलश्च शृङ्गं डमर्वाख्यवाद्यम् ॥३०॥ परासिद्धिमोक्षस्त्रितापश्च नूनं प्रभो नर्त्तते खर्परश्च त्रिशूलम् । निवृत्त्यात्मको धर्म एवास्ति शृङ्गं डमर्वाख्यवाद्यं चतुर्थोऽर्थ एव ॥३१॥ सदैकाऽद्वितीयोऽपि नैजीं स्वशक्तिं प्रकृत्यात्मिकां तां स्वतो निर्गमय्य ।

स्वशक्त्या तया श्यामया शोभिताङ्को भवान् राजतेऽलं धरन् प्रेमतस्ताम् ॥३२॥ तया श्यामया भूयते पूर्णशक्त्या सती तद्द्विधैवाऽस्त्यसौ षोडशी च। करेणात्तपाशेन जीवाय बन्धं सविद्याङ्कुशेन प्रदत्ते च मुक्तिम् ॥ ३३ ॥ अविद्यास्वरूपा सपाशेयमेव तथा साङ्कुशा सैव विद्यास्वरूपा। सती पाति सृष्टेरलम्वैभवन्ते वयं नाथ! विद्यापते! त्वां नमामः ॥३४॥ त्रयाणां गुणानां गुणाधार! बीजं तथेशो गुणग्रामिणां वर्त्तसे त्वं । गुणेभ्योऽप्यतीतस्य तेऽङ्के गुणात्मप्रकृत्या स्थितं सन्नमामो भवन्तम् ॥३५॥ प्रभो! सिद्धरूपस्तथा सिद्धिबीजं अहो! सिद्धराजोऽपि सिद्धेर्लयोऽसि । ददद्भाग्यवद्भ्यः परासिद्धिमेतानितो मोचयेस्ते नमः सिद्धिनाथ! ॥ ३६ ॥ स्वतेजोमयस्तेजआधाररूपोऽपि तेजस्सुबीजञ्च तेजस्विनाथः । तिजः कर्षसि प्राणिनस्तेजसा स्वाभिमुख्येन तेजोमय! त्वां नमामः ॥३७॥ असि ज्ञान्यधीशोऽपि बुद्धेरतीतस्त्वधिष्ठाय बुद्धिं सतः प्राणिनस्त्वम्। नयस्येव शश्वद्धिया मोक्ष-

भूमिं वयं धीश ! नम्रा नमामो भवन्तम्॥३८॥ विभो ! सृष्टिरक्षाविनाशैकहेतो ! परेभ्यः पर ! त्वं प्रभो ! वर्चसेऽलम् । महीयो विराड्रूपवृक्षस्य वीजं वयं सर्वशक्त्यात्मक ! त्वां नमामः ॥३९॥ तवास्याङ्कुरेणैव मूलप्रकृत्या तथा वर्ध्यते विष्णुवेधोमहेशैः । त्रिभिः स्कन्धरूपैः सुरर्ष्यादिभिस्तैरनेकैर्हि शाखाप्रशाखास्वरूपैः॥४०॥ अहो तस्य वृक्षस्य संसार एव फलं विद्यते नात्र सन्देहलेशः। विभो ! विश्वनाथ ! प्रणम्याशुतोष ! वयं सादरं साञ्जलि त्वां नमामः ॥४१॥ अपि त्वं महीयस्तरोस्तस्य वीजं तदाधार आस्सेऽखिलाधाररूपः। निराधाररूपोऽपि धर्मात्मना तु प्रभो ! धर्ममूर्ते ! भवन्तं नमामः॥४२॥ विहारिन्विभो ! भक्तचेतोनिकेते शरण्यं किलैकान्ततस्त्वां व्रजामः। यथा नो भवेदत्र कल्याणमाशु तदेवाधुना देव ! शम्भो ! विधेहि ॥ ४३ ॥

इती श्रीशम्भुगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीसदाशिवपितृसंवादे श्रीशम्भुविराड्रूपस्तुतिः ।

# श्रीशिवस्तोत्रम् ।

जय शंकर पार्वतीपते मृड शम्भो शशिखण्ड-मण्डन । मदनान्तक भक्तवत्सल प्रियकैलास दयासुधाम्बुधे ॥ १ ॥ सदुपायकथास्वपण्डितो हृदये दुःखशरेण खण्डितः । शशिखण्डशिखण्ड-मण्डनं शरणं यामि शरण्यमीश्वरम् ॥ २ ॥ महतः परितः प्रसर्पतस्तमसो दर्शनभेदिनो भिदे । दिन-नाथ इव स्वतेजसा हृदयव्योम्नि मनागुदेहि नः ॥ ३ ॥ न वयं तव चर्मचक्षुषा पदवीमप्युपवीक्षितुं क्षमाः । कृपयाऽभयदेन चक्षुषा सकलेनेश विलोक-याशु नः ॥ ४ ॥ त्वदनुस्मृतिरेव पावनी स्तुति-युक्ता न हि वक्तुमीश सा । मधुरं हि पयः स्वभा-वतो ननु कीदृक् सितशर्करान्वितम् ॥ ५ ॥ सवि-षोऽप्यमृतायते भवाञ्छवमुण्डाभरणोऽपि पावनः । भव एव भवान्तकः सतां समदृष्टिर्विषमेक्षणोऽपि सन् ॥ ६ ॥ अपि शूलधरो निरामयो दृढवैराग्य-

रतोऽपि रागवान्। अपि भैक्ष्यचरो महेश्वरश्चरितं चित्रमिदं हि ते प्रभो॥ ७॥ वितरत्यभिवाञ्छितं दृशा परिदृष्टः किल कल्पपादपः। हृदये स्मृत एव धीमते नमतेऽभीष्टफलप्रदो भवान्॥ ८॥ सहसैव भुजंगपाशवान् विनिगृह्णाति न यावदन्तकः। अभयं कुरु तावदाशु मे गतजीवस्य पुनः किमौषधैः॥ ९॥ सविषैरिव भीमपन्नगैर्विषयैरेभिरलं परिक्षतम्। अमृतैरिव सम्भ्रमेण मामभिषिञ्चाशु दयावलोकनैः॥ १०॥ मुनयो बहवोऽद्य धन्यतां गमिताः स्वाभिमतार्थदर्शिनः। करुणाकर येन तेन मामवसन्नं ननु पश्य चक्षुषा॥ ११॥ प्रणमाम्यथ यामि चापरं शरणं कं कृपणाभयप्रदम्। विरहीव विभो प्रियामयं परिपश्यामि भवन्मयं जगत्॥ १२॥ बहवो भवताऽनुकम्पिताः किमितीशान न मानुकम्पसे। दधता किमु मन्दराचलं परमाणुः कमठेन दुर्धरः॥ १३॥ अशुचिं यदि मानुमन्यसे किमिदं मूर्ध्नि कपालदाम ते। उत शाठ्यमसाधुसंगिनं विपलक्ष्मासि न किं द्वि-

जिह्वधृक्॥ १४ ॥ क्व दृशं विदधामि किं करोम्यनु-
तिष्ठामि कथं भयाकुलः। क्व नु तिष्ठसि रक्ष रक्ष
मामयि शंभो शरणागतोऽस्मि ते ॥ १५ ॥ विलुठा-
म्यवनौ किमाकुलः किमुरो हन्मि शिरश्छिनद्मि वा।
किमु रोदिमि रारटीमि किं कृपणं मां न यदीक्षसे
प्रभो ॥ १६ ॥ शिव सर्वग शर्व शर्मद प्रणतो देव
दयां कुरुष्व मे। नम ईश्वर नाथ दिक्पते पुनरे-
वेश नमोनमोऽस्तु ते ॥ १७ ॥ शरणं तरुणेन्दुशेखरः
शरणं मे गिरिराजकन्यका। शरणं पुनरेव तावुभौ
शरणं नान्यदुपैमि दैवतम् ॥ १८ ॥ उपमन्युकृतं
स्तवोत्तमं जपतः शम्भुसमीपवर्त्तिनः। अभिवा-
ञ्छितभाग्यसम्पदः परमायुः प्रददाति शंकरः ॥१९॥
उपमन्युकृतं स्तवोत्तमं प्रजपेद्यस्तु शिवस्य
सन्निधौ। शिवलोकमवाप्य सोऽचिरात् सह
तेनैव शिवेन मोदते ॥ २० ॥

इत्युपमन्युकृतं श्रीशिवस्तोत्रम्।

# श्रीविष्णुस्तुतिः ।

देवा ऊचुः ।

देवादिदेव त्वदचिन्त्यदेहे आद्यन्तशून्ये प्रसमीक्ष्य नूनम् । देवानृषीन् पितृगणाननन्तान् पृथक् स्थितान् विस्मयमावहामः ॥ १ ॥ तवैव देहाद्भुवनानि देव चतुर्दशैतेषु निवासिनो हि । देवाश्च दैत्याश्च मनुष्यसङ्घाश्चतुर्विधा भूतगणाश्च सर्वे ॥ २ ॥ जाताः पृथक् सन्ति चतुर्दशस्वहो यान्त्यत्र नाशं भुवनैर्निजैः समम् । संपश्यतामीदृशमद्भुतं प्रभो बुद्धिर्भ्रमे मज्जति नः समाकुला ॥ ३ ॥ देवाश्च ये स्थूलशरीरमानिनो विशन्ति ते सूक्ष्मशरीरमानिषु । देवास्तु ये सूक्ष्म शरीरमानिनो विशन्त्यहो कारणकायमानिषु ॥ ४ ॥ इमे तु सर्वे प्रविशन्त्यचिन्त्ये महाप्रभावे क्व च तन्न विद्मः । दृष्ट्वेदृशं तेऽद्भुतकार्य्यमीश वयं विमुग्धाः खलु ते प्रभावात् ॥ ५ ॥ साचिन्त्यशक्तिर्भवतो ध्रुवा किम् या वाङ्मनोबुद्धिभिरप्रमेया ।

त्वत्तो जनित्वा निजगर्भमध्ये लोकान् धरत्येव चतुर्दशालम् ॥ ६ ॥ ब्रह्माण्डमप्येवमनन्तपिण्ड-मयञ्च सर्गं धरते सदा सा । सर्वं प्रसूते पुनरन्तकाले लीनं तु तत् सा कुरुते स्वगर्भे ॥ ७ ॥ दृष्ट्वा चमत्कारमिमं न विद्मः कथं भवत्यद्भुतमेतदीश । किं कारणञ्चास्य पुनः क आदिरस्य प्रवाहस्य तथास्ति कोऽन्तः ॥८॥ अनन्त सर्वेऽनुभवाम आदरात् त्वामीशं जन्मस्थितिनाशवर्जितम् । अनन्तवक्त्रं बहुधा स्तुतं सुरैर्गन्धर्वयक्षैर्विविधैश्च सूरिभिः ॥ ९ ॥ अमितशक्तियुतोऽपि भवन् भवानमितबाहुरसि त्वमनन्तपात् । अमितसूर्य्यमृगाङ्कशिखिग्रहादमितनेत्रधरस्त्वमिहेक्ष्यसे ॥ १० ॥ त्वं तेजसां तेज इहासि चेतने चैतन्यरूपोऽसि ददासि शक्तये । शक्तिं प्रभो प्रेरयसे मतिं तथा त्वत्सत्तया सर्वमिदं हि सत्त्ववत् ॥११॥ विभो त्वयैकेन हि मध्यलोक ऊर्द्ध्वं तथाधश्च दिशां समूहः । अनाद्यनन्तः समयस्तथासौ व्याप्तोऽस्ति धीर्येन विमोहिता नः ॥१२॥ गुरो जगत्कारण ते शरीरादद्वैतरूपात्तव शक्तिराद्या ।

याऽचिन्तनीया प्रकटत्वमेति ब्रह्माण्डमेषा
तनुते ह्यनन्तम् ॥ १३ ॥ पूर्वं महत्तत्त्ववराभिमानी
जातस्ततोऽहङ्कृतितत्त्वमानी । देवस्ततो मानसत-
त्त्वमानी निर्माति चोत्पद्य विचित्रदृश्यम् ॥ १४ ॥
ततः क्रमणैव सुरा इमे सदा तन्मात्रतत्त्वस्य
किलाभिमानिनः । ज्ञानेन्द्रियाणामथ येऽभिमा-
निनः कर्मेन्द्रियाणामपि येऽभिमानिनः ॥ १५ ॥
ये पञ्चभूतैकपराभिमानिनस्ते त्वच्छरीरादभिजा-
यमानाः । नास्तिस्वरूपाज्जगतोऽस्तिभावं प्रकुर्वते
ते गहनप्रभावः ॥ १६ ॥ शक्तिस्तवाऽचिन्त्यविभा-
वशालिनी स्वस्यां तनौ सर्वलयं प्रकुर्वती । त्वय्येव
नैजं विलयं वितन्वती प्रपातयत्यत्र विचित्रतासु नः
॥१७॥ त्वत्तो ह्यनन्ता विधिविष्णुशम्भवः कुर्वन्ति स-
म्भूय जनिं स्थितिं लयम् । ब्रह्माण्डकस्याप्यमितस्य
सर्वथा चराचरस्याद्भुतचित्रताजुषः ॥१८॥ केचि-
द्यथा बालगणा रजोगृहं निर्मान्त्यवन्त्यन्य इदं तथा-
परे । विनाशयन्तीति वयं तवाधुना पश्याम इत्थं
वपुषि ध्रुवं प्रभो ! ॥१९॥ रुद्राश्च सर्वे वसवश्च निर्जरा

आदित्यसंघा मघवा प्रजापतिः। विश्वेसुरा वायुर-
संख्यकामरा दैत्या ह्यनन्ताः पितरस्तथर्षयः ॥ २० ॥
त्वत्कायजास्त्वां बहुधा यतन्ते ज्ञातुं परन्ते न हि
पारयन्ते। अतो विमुग्धास्तव मामया ते पुनर्विश-
न्त्येत्य तवैव काये ॥२१॥ कारणं कारणानां त्वमेवा-
क्षरं ब्रह्म विज्ञेयमेकं त्वमेवास्यहो। आश्रयस्थानमेकं
निधानं परं विश्वसङ्घस्य जानन्ति ते कोविदाः ॥२२॥
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो
मतो नः। प्रभोऽतितेजोमयमादिहीनमनन्तमप्ये-
कमनेकवर्णम् ॥ २३ ॥ अचिन्तनीयं ह्यवित-
र्कणीयं किलामितैरङ्गभरैः सुपूर्णम्। पश्यन्त आश्च-
र्यकरं प्रदीप्तं विराट्शरीरं तव विस्मिताः स्मः ॥२४॥
धृतिञ्च विन्दाम इह त्वदीये कायेऽमितांस्तान्प्रस-
मीक्ष्य लोकान्। प्रसीद देवेश! जगन्निवास! त्वमे-
व नः सम्मत आदिदेवः ॥ २५ ॥ अहो किमाश्च-
र्यमिदं विभाति क्षुद्रात्समारभ्य तृणादसीम्नः।
ब्रह्माण्डपर्यन्तविशालसृष्टेः सृष्टिस्थितिप्रत्यवहार-
हेतोः ॥ २६ ॥ यथार्भकाः क्रीड़नसक्तचित्ता विमो-

हितास्तन्मयतामुपेताः । अनेकधाऽनेकविधस्वरूपा-
स्तथा पृथक् देवगणा नियुक्ताः ॥ २७ ॥ स्थूला-
त्स्थूलतरं नित्यं ज्ञानलोचनगोचरं । अनाद्यन्तं
विराड्रूपं दृष्ट्वा ते विभुमद्भुतम् ॥ २८ ॥ अपि
चेत् परमानन्दो जातो नश्चेतसि प्रभो ! । न तथाऽपि
वयं द्रष्टुं शक्नुयाम बहुलक्षणम् ॥ २९ ॥ जीवानां
मनसो बुद्धेर्वाचोऽगोचरमित्यहो । अपूर्वं भवतो
रूपमालोक्याश्चर्यसङ्कुलम् ॥ ३० ॥ मनो नो मूर्च्छितं
बुद्धिः स्थगिता भवति प्रभो ! । शैथिल्यं यान्ति
हे स्वामिन्निन्द्रियाण्यखिलानि नः ॥ ३१ ॥ अतो
वयं हि विश्वात्मन् ! विनीतं प्रार्थयामहे । त्वद्वि-
भूतिस्वरूपेषु यद्भवन्तं वयं विभो ! ॥ ३२ ॥
देशे काले च सर्वत्र पात्रे द्रष्टुं यथेश्महे । उप-
दिश्यामहे नाथ ! तथोपायं वयं स्वयम् ॥ ३३ ॥

इति श्रीविष्णुगीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे देवमहाविष्णुसंवादे
श्रीविष्णुविराड्रूपस्तुतिः ।

———:o:———

# श्रीकृष्णाष्टकम् ।

—:०:—

श्रियाश्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयो धियां साक्षी शुद्धो हरिरसुरहन्ताब्जनयनः । गदी शंखी चक्री विमलवनमाली स्थिररुचिः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ १ ॥ यतः सर्वं जातं वियदनिलमुख्यं जगदिदं स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा । लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ २ ॥ असूनायम्यादौ यमनियममुख्यैः सुकरणैर्निरुध्येदं चित्तं हृदि विलयमानीय सकलम् । यमीड्यं पश्यन्ति प्रवरमतयो मायिनमसौ शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ३ ॥ पृथिव्यां तिष्ठन् यो यमयति महीं वेद न धरा यमित्यादौ वेदो वदति जगतामीशममलम् । वियन्तारं ध्येयं मुनिसुरनृणां मोक्षदमसौ शरण्यो लोकेशो मम भवतु

कृष्णोऽक्षिविषयः ॥ ४ ॥ महेन्द्रादिर्देवो जयति दितिजान् यस्य बलतो न कस्य स्वातन्त्र्यं क्वचिदपि कृतौ यत्कृतिमृते। कवित्वादेर्गर्वं परिहरति योऽसौ विजयिनः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ५ ॥ विना यस्य ध्यानं व्रजति पशुतां सूकरमुखां विना यस्य ज्ञानं जनिमृतिभयं याति जनता। विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ ६ ॥ नरातङ्कोत्तङ्कः शरणशरणो भ्रान्ति हरणो घनश्यामो वामो व्रजशिशुवयस्योऽर्जुनसखः। स्वयंभूर्भूतानां जनक उचिताचारसुखदः शरण्यो लोकेशो भवतु कृष्णोऽक्षिविषयः ॥७॥ यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः। सतां धाता स्वच्छो निगमगुणगीतो व्रजपतिः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥८॥ इति हरिरखिलात्माराधितः शंकरेण श्रुतिविशदगुणोऽसौ मातृमोक्षार्थमाद्यः । यतिवरनिकटे

श्रीयुक्त आविर्बभूव स्वगुणवृत उदारः शंखच
क्राब्जहस्तः ॥ ६ ॥

इति श्रीमच्छङ्कराचार्यविरचितं
श्रीकृष्णाष्टकम् ।

---

# श्रीवासुदेवस्तुतिः ।

देवा ऊचुः ।

सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये। सत्यस्य सत्यमृतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः॥ १ ॥ एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा। सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः ॥ २॥ त्वमेक एवास्य सतः प्रसूतिस्त्वं संनिधानं त्वमनुग्रहश्च। त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये ॥ ३॥ विभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य। सत्त्वोपपन्नानि सुखावहानि सता-

मभद्राणि मुहुः खलानाम् ॥ ४ ॥ त्वय्यम्बुजाक्षा-
खिलसत्त्वधाम्नि समाधिना वेशितचेतसैके।
त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं
भवाब्धिम् ॥ ५ ॥ स्वयं समुत्तीर्य्य सुदुस्तरं द्युम-
न्भवार्णवं भीममदभ्रसौहृदाः। भवत्पदाम्भोरुह-
नावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥६॥
येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावाद-
विशुद्धबुद्धयः। आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ॥ ७ ॥ तथा न ते
माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्ध-
सौहृदाः। त्वयाभिगुप्ता विचरन्ति निर्भयाः विना-
यकानीकपमूर्द्धसु प्रभो ॥ ८ ॥ सत्त्वं विशुद्धं
श्रयते भवान् स्थितौ शरीरिणां श्रेय उपायनं वपुः।
वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः
समीहते ॥ ९ ॥ सत्त्वं न चेद्धातरिदं निजं भवेद्वि-
ज्ञानमज्ञानभिदापमार्जनम्। गुणप्रकाशैरनुमीयते
भवान् प्रकाशते यस्य च येन वा गुणः ॥१०॥
न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य

स्साक्षिणः। मनोवचोभ्यामनुमेयवर्त्मनो देव क्रिया-
यां प्रतियन्त्यथापि हि ॥ ११ ॥ शृण्वन्गृणन्संस्म-
रयंश्च चिन्तयन्नामानि रूपाणि च मङ्गलानि ते।
क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भ-
वाय कल्पते ॥ १२ ॥ दिष्ट्या हरेऽस्याद्भवतः
पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः। दिष्ट्या-
ऽङ्किताँ त्वत्पदकैः सुशोभनैर्द्रक्ष्याम गां द्याञ्च तवा-
नुकम्पिताम् ॥ १३ ॥ न तेऽभवस्येश भवस्य कारणं
विना विनोदं वत तर्कयामहे। भवोनिरोधः स्थिति-
रप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि ॥ १४ ॥
मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधे-
षु कृतावतारः। त्वं पासि नस्त्रिभुवनं च यथाऽ
धुनेश भारं भुवो हर यदूत्तम वन्दनं ते ॥१५॥

इति श्रीमद्भागवते महापुराणे वैय्यासिक्यां
अष्टादशसाहस्र्यां संहितायां
श्रीवासुदेवस्तुतिः।

———:0:———

५

# श्रीसूर्यस्तुतिः ।

ऋषय ऊचुः ।

देवादिदेव ! प्रथितप्रभाव ! दृष्ट्वा महाकाश इह प्रसन्ने । अनाद्यनन्ते सुविराट्शरीरमनाद्यनन्तं तव विस्मिताः स्मः ॥ १ ॥ तव प्रसादात् खलु दिव्यदृष्टिसमृद्धिमन्तोऽपि वयं भवामः । अपूर्वदेहस्य तवैकमङ्गमपीक्षितुं पूर्णमहो क्षमा न ॥ २ ॥ भवच्छरीरप्रतिरोमकूपमहो महासूर्य्यगणः समन्तात् । अस्माकमेतानि समुज्ज्वलानि स्तम्भन्ति दिव्यान्यपि दर्शनानि ॥ ३ ॥ तवाङ्घ्रिमाश्रित्य यथाधिकारं ब्रह्माण एते हरयो हराश्च । सृजन्ति रक्षन्ति च संहरन्ति ब्रह्माण्डसङ्घानिति दृश्यतेऽत्र ॥ ४ ॥ ऊर्द्ध्वेऽप्यधोऽपीश्वर ! नाभितस्ते लोकानसङ्ख्यान् ननु सप्त सप्त । निरीक्ष्य चित्रं स्मृतिशक्तिहीनाः संस्तम्भिताः केऽपि वयं भवामः ॥५॥ विराट्स्वरूपा दश बाहवस्ते दिशो दश व्याप्य विराजमानाः । तिष्ठन्ति

सम्यक् सुविचित्रमेषां नादिं निरीक्षामह एवम-
न्तम् ॥ ६ ॥ एषां कराणां समनन्तभावात् व्याप्तं
महाकाशमपि ह्यनन्तम् । एतत्पुनश्चिन्तयतां मनो नो
मोहाम्बुधौ साधु निमज्जतीव ॥७॥ आनन्ददस्याऽ-
पि तवाननस्य विचित्रकार्य्यं विवरस्य वीक्ष्य ।
अहो वयं विस्मयलुप्तधैर्य्याः स्मः कीदृशास्तन्नहि व-
क्तुमीशाः ॥ ८ ॥ अतीतसङ्ख्या विबुधा दिगीशाः
सूर्य्याः शशाङ्काः कमलासनाश्च । अहो ग्रहोपग्रह-
तारकाद्याः सर्व्वेऽत्र तिष्ठन्ति विचित्रदृश्याः ॥ ९ ॥
सिद्धाः सुरा यक्षमहोरगाद्या मर्त्या अमर्त्या भुवन
समन्तात् । चराचरं हे जगदादिदेव ! दृश्यन्त एवाऽ-
त्र विचित्रमेतत् ॥ १० ॥ ब्रह्माण्डसङ्घानमितानसङ्-
ख्यान् निर्गच्छतोऽस्मात् खलु काँश्चनाशु । प्रातक्षणं
कांश्चन गच्छतोऽत्र दृष्ट्वा वयं विस्मयमाश्रिताः
स्मः ॥११॥ एवं विधं किञ्चन नैव विघ्नो यदत्र नो सत्
सविकाशमस्ति । सुसंयमेनाऽपि कथञ्चनाऽपि न ज्ञा-
तुमीशा वयमस्य तत्त्वम् ॥१२॥ अहो महाकाल विभो-
रनन्तरूपं महोग्रोग्रमखण्डनीयम् । कथञ्चि-

देषां परिपश्यतां नो बुद्धिर्हता व्याकुलतां प्रयाति ॥ १३ ॥ प्रभो ! तव श्रीमुखमण्डनस्य शोभां परानन्दमयञ्च तेजः। सम्पश्यतां नः परमाभिमानः स्वरूपशून्योऽस्तमितः परात्मन् ! ॥ १४ ॥ तव प्रसादान्नवदिव्यदृष्टिं प्राप्याऽपि विश्वेश्वर ! विश्वरूपम्। अनाद्यनन्तं किमिवाद्य वीक्ष्य भीता वयं मूर्च्छितवद्भवामः ॥ १५ ॥ अस्माकमास्ते जड़ितैव दृष्टिः लुप्तैव शान्तिः प्रहतैव बुद्धिः। कर्त्तव्यमूढ़ा वयमाभवामो गुरुं भवन्तं शरणं प्रपन्नाः ॥ १६ ॥ रूपं प्रभो संहर संहरैतन्मनोहरं दर्शय दर्शयाऽन्यत्। पूर्णां धृतिं स्याम यथाधिगन्तुमीशास्तथा त्वं दयया विधेहि ॥ १७ ॥ अनन्तवैचित्र्यमयं प्रदीप्तं विराट्स्वरूपं तव भीतिदं यत्। तस्माद्वयं चित्तसदेकतत्त्वभावं सुपातुं न तु पारयामः ॥ १८ ॥ तत्सच्चिदानन्दमयाऽद्वितीयमतीतवाङ्मानसवर्त्मरूपम्। दृष्ट्वा वयं स्याम यथा कृतार्थास्तथा विदध्या भुवनेश्वर त्वम् ॥ १९ ॥। कृपामय ! त्वां शरणागतवत्सलमचिन्त्यरूपं शरणागता वयम्। वपुर्मनो-

वाग्भिरलं समन्ततः सहस्रशः सम्प्रणमाम आकुलाः ॥ २० ॥

इति श्रीसूर्य्यगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे सूर्य्यर्षिसंवादे श्रीसूर्य्यविराड्रूपस्तुतिः ।

---

# श्रीविश्वनाथाष्टकम् ।

---

गङ्गातरङ्गरमणीयजटाकलापं गौरीनिरन्तरविभूषितवामभागम् । नारायणप्रियमनङ्गमदापहारं वाराणसीपुरपतिं भज विश्वनाथम् ॥ १ ॥ वाचामगोचरमनेकगुणस्वरूपं वागीशविष्णुसुरसेवितपादपीठम् । वामेन विग्रहवरेण कलत्रवन्तं वाराणसीपुरपतिं भज विश्वनाथम् ॥ २ ॥ भूताधिपं भुजगभूषणभूषिताङ्गं व्याघ्राजिनाम्बरधरं जटिलं त्रिनेत्रम् । पाशाङ्कुशाभयवरप्रदशूलपाणिं वाराणसीपुरपतिं भज विश्वनाथम् ॥ ३ ॥ शीतांशुशो-

भितकिरीटविराजमानं भालेक्षणानलविशोषितप-
ञ्चबाणम् । नागाधिपारचितभासुरकर्णपूरं वारा-
णसीपुरपतिं भज विश्वनाथम् ॥ ४ ॥ पञ्चाननं
दुरितमत्तमतङ्गजानां नागान्तकं दनुजपुङ्गवपन्नगा-
नाम् । दावानलं मरणशोकजराटवीनाम् वारा-
णसीपुरपतिं भज विश्वनाथम् ॥ ५ ॥ तेजोमयं
सगुणनिर्गुणमद्वितीयमानन्दकन्दमपराजितमप्रमेय-
म् । नागात्मकं सकलनिष्कलमात्मरूपं वारा-
णसीपुरपतिं भज विश्वनाथम् ॥ ६ ॥ आशां वि-
हाय परिहृत्य परस्य निन्दां पापे रतिञ्च सुनिवा-
र्य्य मनः समाधौ । आदाय हृत्कमलमध्यगतं परेशं
वाराणसीपुरपतिं भज विश्वनाथम् ॥ ७ ॥ रागादि-
दोषरहितं स्वजनानुरागवैराग्यशान्तिनिलयं गिरि-
जासहायं । माधुर्यधैर्यसुभगं गरलाभिरामं वारा-
णसीपुरपतिं भज विश्वनाथम् ॥ ८ ॥ वाराणसी-
पुरपतेः स्तवनं शिवस्य व्याख्यातमष्टकमिदं पठते
मनुष्यः । विद्यां श्रियं विपुलसौख्यमनन्तकीर्तिं
सम्प्राप्य देहविलये लभते च मोक्षम् ॥ ९ ॥ विश्व-

नाथाष्टकमिदं यः पठेच्छिवसन्निधौ। शिवलोकमवाप्नोति शिवेन सह मोदते ॥ १० ॥

इति श्रीव्यासदेवकृतं श्रीविश्वनाथाष्टकम् ।

# श्रीअन्नपूर्णास्तोत्रम् ।

नित्यानन्दकरी वराभयकरी सौन्दर्य्यरत्नाकरी निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी। प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥१॥ नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी मुक्ताहारविलम्बमानविलसद्वक्षोजकुम्भान्तरी। काश्मीरागुरुवासिता रुचिकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ २ ॥ योगानन्दकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी। सर्वैश्वर्यसमस्तवाञ्छितकरी काशीपुराधीश्वरी भिक्षां

देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ३ ॥
कैलासाचलकन्दरालयकरी गौरी उमा शङ्करी
कौमारी निगमार्थगोचरकरी ओङ्कारबीजाक्षरी।
मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी भिक्षां
देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥४॥ दृश्या-
दृश्यप्रभूतवाहनकरी ब्रह्माण्डभाण्डोदरी लीलाना-
टकसूत्रभेदनकरी विज्ञानदीपाङ्करी। श्रीविश्वेशम-
नःप्रसादनकरी काशीपुराधीश्वरी भिक्षां देहि
कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ५ ॥ उर्वी सर्व-
जनेश्वरी भगवती मातान्नपूर्णेश्वरी वेणी नीलसमा-
नकुन्तलहरी नित्यान्नदानेश्वरी। सर्वानन्दकरी दशा-
शुभकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्ब-
नकरी मातान्नपूर्णेश्वरी ॥ ६ ॥ आदिक्षान्तसमस्त-
वर्णनकरी शम्भोस्त्रिभावाकरी काश्मीरा त्रिजले-
श्वरी त्रिलहरी नित्याङ्कुरा शर्वरी। कामाकाङ्क्ष-
करी जनोदयकरी काशीपुराधीश्वरी भिक्षां देहि
कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ७ ॥ देवी
सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी वामं

स्वादुपयोधरप्रियकरी सौभाग्यमाहेश्वरी । भक्ता-
भीष्टकरी दशाशुभकरी काशीपुराधीश्वरी भिक्षां
देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ ८ ॥
चन्द्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुन्तलहरी चन्द्रार्कवर्णेश्वरी ।
मालापुस्तकपाशसाङ्कुशधरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥९॥
क्षत्रत्राणकरी महाभयकरी माता कृपासागरी
साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरश्रीधरी ।
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥१०॥
अन्नपूर्णे सदा पूर्णे शङ्करप्राणवल्लभे । ज्ञानवैराग्य-
सिद्ध्यर्थं भिक्षां देहि च पार्वती ॥ ११ ॥ माता च
पार्वती देवी पिता देवो महेश्वरः । बान्धवाः शिव-
भक्ताश्च स्वदेशो भुवनत्रयम् ॥ १२ ॥

इति श्रीमच्छङ्कराचार्य्यविरचितं
श्रीअन्नपूर्णास्तोत्रम् ।

——:o:——

# श्रीकालभैरवाष्टकम् ।

देवराजसेव्यमानपावनाङ्घ्रिपङ्कजं व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम् । नारदादियोगिवृन्दवन्दितं दिगम्बरं काशिकापुराधिनाथकालभैरवं भजे ॥ १ ॥ भानुकोटिभास्वरं भवाब्धितारकं परं नीलकण्ठमीप्सितार्थदायकं त्रिलोचनम् । कालकालमम्बुजाक्षमक्षशूलमक्षरं काशिकापुराधिनाथकालभैरवं भजे ॥ २ ॥ शूलटङ्कपाशदण्डपाणिमादिकारणं श्याममकायमादिदेवमक्षरं निरामयम् । भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं काशिकापुराधिनाथकालभैरवं भजे ॥ ३ ॥ भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं भक्तवत्सलं स्थितं समस्तलोकविग्रहम् । विनिक्वणन्मनोज्ञहेमकिङ्किणीलसत्कटिं काशिकापुराधिनाथकालभैरवं भजे ॥४॥ धर्मसेतुपालकं त्वधर्ममार्गनाशकं कर्मपाशमोचकं सुशर्मदायकं विभुम् । स्वर्णवर्णशे-

षपाशशोभिताङ्गमण्डलं काशिकापुराधिनाथ-
कालभैरवं भजे ॥ ५ ॥ रत्नपादुकाप्रभाभिराम-
पादयुग्मकं नित्यमद्वितीयमिष्टदैवतं निरञ्जनम् ।
मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं काशिकापुरा-
धिनाथकालभैरवं भजे ॥६॥ अट्टहासभिन्नपद्मजाण्ड-
कोशसन्तति दृष्टिपातनष्टपापजालमुग्रशासनम् ।
अष्टसिद्धिदायकं कपालमालिकन्धरं काशिका-
पुराधिनाथकालभैरवं भजे ॥ ७ ॥ भूतसङ्घनायकं
विशालकीर्त्तिदायकं काशिवासिलोकपुण्यपापशोध-
कं विभुम् । नीतिमार्गकोविदं पुरातनं जगत्पतिं
काशिकापुराधिनाथकालभैरवं भजे ॥ ८ ॥ काल-
भैरवाष्टकं पठन्ति ये मनोहरं ज्ञानमुक्तिसाधनं
विचित्रपुण्यवर्द्धनम् । शोकमोहदैन्यलोभकोपता-
पनाशनं ते प्रयान्ति कालभैरवाङ्घ्रिसन्निधिं
ध्रुवम् ॥ ९ ॥

इति श्रीमच्छङ्कराचार्य्यविरचितं
श्रीकालभैरवाष्टकम् ।

# श्रीमणिकर्णिकाष्टकम् ।

त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्ति-
प्रदौ वादं तौ कुरुतः परस्परमुभौ जन्तोः प्रयाणो-
त्सवे । मद्रूपो मनुजोऽयमस्तु हरिणा प्रोक्तः शिव-
स्तत्क्षणात्तन्मध्याद्भृगुलाञ्छनो गरुडगः पीताम्बरो
निर्गतः ॥ १ ॥ इन्द्राद्यास्त्रिदशाः पतन्ति नियतं
भोगक्षये ये पुनर्जायन्ते मनुजास्ततोऽपि पशवः
कीटाः पतङ्गादयः । ये मातर्मणिकर्णिके तव जले
मज्जन्ति निष्कल्मषाः सायुज्येऽपि किरीटकौस्तु-
भधरा नारायणाः स्युर्नराः ॥ २ ॥ काशी धन्य-
तमा विमुक्तिनगरी सालङ्कृता गङ्गया तत्रेयं मणि-
कर्णिका सुखकरी मुक्तिर्हि तत्किङ्करी । स्वर्लोक-
स्तुलितः सहैव विबुधैः काश्या समं ब्रह्मणा काशी
क्षोणितले स्थिता गुरुतरा स्वर्गो लघुः खे गतः ॥३॥
गङ्गातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तमा
तस्यां सा मणिकर्णिकोत्तमतमा यत्रेश्वरो

मुक्तिदः । देवानामपि दुर्लभं स्थलमिदं पापौ-
घनाशक्षमं पूर्वोपार्जितपुण्यपुञ्जगमकं पुण्यैर्जनैः
प्राप्यते ॥ ४ ॥ दुःखाम्भोनिधिमग्नजन्तुनिवहा-
स्तेषां कथं निष्कृतिर्ज्ञात्वैतद्धि विरञ्चिना विर-
चिता वाराणसी शर्मदा । लोकाः स्वर्गमुखा-
स्ततोऽपि लघवो भोगान्तपातप्रदाः काशी
मुक्तिपुरी सदा शिवकरी धर्मार्थकामोत्तरा
॥ ५ ॥ एको वेणुधरो धराधरधरः श्रीवत्स-
भूषाधरो योऽप्येकः किल शङ्करो विषधरो गङ्गाधरो
माधवः । ये मातर्मणिकर्णिके तव जले मज्जन्ति
ते मानवाः रुद्रा वा हरयो भवन्ति बहवस्तेषां बहुत्वं
कथम् ॥ ६ ॥ त्वत्तीरे मरणं तु मङ्गलकरं देवैः
सदा श्लाघ्यते शक्रस्तं मनुजं सहस्रनयनैर्द्रष्टुं सदा
तत्परः । आयान्तं सविता सहस्रकिरणैः प्रत्युद्गतो
ऽभूत्सदा पुण्योऽसौ वृषगोऽथवा गरुडगः किं मन्दिरं
यास्यति ॥ ७ ॥ मध्याह्ने मणिकर्णिकास्नपनजं
पुण्यं न वक्तुं क्षमः स्वीयैरब्दशतैश्चतुर्मुखसुरो
वेदार्थदीक्षागुरुः । योगाभ्यासबलेन चन्द्रशिखर-

स्तत्पुण्यपारं गतस्त्वत्तीरे प्रकरोति सुप्तपुरुषं नारायणं वा शिवम् ॥ ८ ॥ कृच्छ्रैः कोटिशतैः स्वपापनिधनं यच्चाश्वमेधैः फलं तत्सर्वं मणिकर्णिकास्नपनजे पुण्ये प्रविष्टं भवेत् । स्नात्वा स्तोत्रमिदं नरः पठति चेत्संसारपाथोनिधिं तीर्त्वा पल्वलवत्प्रयाति सदनं तेजोमयं ब्रह्मणः ॥९॥

इति श्रीमच्छङ्कराचार्यविरचितं
श्रीमणिकर्णिकाष्टकम् ।

---

# श्रीगङ्गास्तुतिः ।

मातः शैलसुतासपत्नि वसुधाशृङ्गारहारावलि स्वर्गारोहणवैजयन्ति भवतीं भागीरथीं प्रार्थये। त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्वीचिषु प्रेङ्खतस्त्वन्नामस्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः ॥ १ ॥ त्वत्तीरे तरुकोटरान्तरगतो गङ्गे विहङ्गो वरं त्वन्नीरे नरकान्तकारिणि वरं मत्स्योऽथवा कच्छपः । नैवा-

न्यत्र मदान्धसिन्धुरघटासङ्घट्टघण्टारणत्कारत्रस्त-समस्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥ २ ॥ उक्षा पक्षी तुरग उरगः कोऽपि वा वारणो वाऽवारीणः स्यां जननमरणक्लेशदुःखासहिष्णुः। न त्वन्यत्र प्रविरलरणत्कङ्कणक्काणमिश्रं वारस्त्रीभिश्चमरमरुता वीजितो भूमिपालः ॥ ३ ॥ काकैर्निष्कुषितं श्वभिः कवलितं गोमायुभिर्लुण्ठितं स्रोतोभिश्चलितं तटाम्बुलुलितं वीचीभिरान्दोलितम्। दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानः कदा द्रक्ष्येऽहं परमेश्वरि त्रिपथगे भागीरथि स्वं वपुः ॥ ४ ॥ अभिनवबिसवल्लीपादपद्मस्य विष्णोर्मदनमथनमौलेर्मालतीपुष्पमाला। जयति जयपताका काप्यसौ मोक्षलक्ष्म्याः क्षपितकलिकलङ्का जाह्नवी नः पुनातु ॥ ५ ॥ एतत्तालतमालसालसरलव्यालोलवल्लीलताच्छन्नं सूर्यकरप्रतापरहितं शङ्खेन्दुकुन्दोज्ज्वलम्। गन्धर्वामरसिद्धकिन्नरवधूतुङ्गस्तनास्फालितं स्नानाय प्रतिवासरं भवतु मे गाङ्गं जलं निर्मलम् ॥ ६ ॥ गाङ्गं वारि मनोहारि मुरारिचरणच्युतम्। त्रिपुरारि-

शिरश्चारि पापहारि पुनातु माम् ॥ ७ ॥ पापापहारि दुरितारि तरङ्गधारि शैलप्रचारि गिरिराजगुहाविदारि । झङ्कारकारि हरिपादरजोऽपहारि गाङ्गं पुनातु सततं शुभकारि वारि ॥ ८ ॥ गङ्गाष्टकं पठति यः प्रयतः प्रभाते वाल्मीकिना विरचितं शुभदं मनुष्यः । प्रक्षाल्य गात्रकलिकल्मषपङ्कमाशु मोक्षं लभेत्पतति नैव नरो भवाब्धौ ॥ ९ ॥

इति श्रीवाल्मीकिना विरचिता श्रीगङ्गास्तुतिः ।

—:०:—

# श्रीगंगाष्टकम् ।

भगवति भवलीलामौलिमाले तवाम्भः कणमणुपरिमाणं प्राणिनो ये स्पृशन्ति । अमरनगरनारीचामरग्राहिणीनां विगतकलिकलङ्कातङ्कमङ्के लुठन्ति ॥१॥ ब्रह्माण्डं खण्डयन्ती हरशिरसि जटावल्लिमुल्लासयन्ती स्वर्लोकादापतन्ती कनकगिरिगुहागण्डशैलात्स्खलन्ती॥ क्षोणीपृष्ठे लुठन्ती दुरित-

चञ्चचमूर्निर्भरं भर्त्सयन्ती पाथोधिं पूरयन्ती सुरनगर-
सरित्पावनी नः पुनातु ॥ २ ॥ मज्जन्मातङ्गकुम्भ-
च्युतमदमदिरामोदमत्तालिजालं स्नानैः सिद्धाङ्ग-
नानां कुचयुगविलसत्कुङ्कुमासङ्गपिङ्गम्। सायं
प्रातर्मुनीनां कुशकुसुमचयैश्छन्नतीरस्थनीरं पा-
यान्नो गाङ्गमम्भः करिकरमकराक्रान्तरंहस्तरङ्गम्॥३॥
आदावादिपितामहस्य नियमव्यापारपात्रे जलं
पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम्।
भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या
कल्मषनाशिनी भगवती भागीरथी भूतले ॥ ४ ॥
शैलेन्द्रादवतारिणी निजजले मज्जज्जनोत्तारिणी
पारावारविहारिणी भवभयश्रेणीसमुत्सारिणी।
शेषाङ्गैरनुकारिणी हरशिरोवल्लीदलाकारिणी
काशीप्रान्तविहारिणी विजयते गङ्गा मनोहा-
रिणी ॥ ५ ॥ कुतो वीचिर्वीचिस्तव यदि गता
लोचनपथं त्वमापीता पीताम्बरपुरनिवासं
वितरसि। त्वदुत्सङ्गे गङ्गे पतति यदि कायस्त-
नुभृतां तदा मातः शातक्रतवपदलाभोऽप्य-

तिलघुः ॥ ६ ॥ भगवति तव तीरे नीरमात्राशनोऽहं विगतविषयतृष्णः कृष्णमाराधयामि । सकलकलुषभङ्गे स्वर्गसोपानसङ्गे तरलतरतरङ्गे देवि गङ्गे प्रसीद ॥ ७ ॥ मातः शम्भवि शम्भुसङ्गमिलिते मौलौ निधायाञ्जलिं त्वत्तीरे वपुषोऽवसानसमये नारायणाङ्घ्रिद्वयम् । सानन्दं स्मरतो भविष्यति मम प्राणप्रयाणोत्सवे भूयाद्भक्तिरविच्युता हरिहराद्वैतात्मिका शाश्वती ॥ ८ ॥ गङ्गाष्टकमिदं पुण्यं यः पठेत्प्रयतो नरः। सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीमच्छङ्कराचार्यविरचितं
श्रीगङ्गाष्टकम् ॥

# श्रीयमुनाष्टकम् ।

—:o:—

कृपापारावारां तपनतनयां तापशमनीं
मुरारिप्रेयस्यां भवभयदवां भक्तिवरदां । विप-
ज्ज्वालान्मुक्तां श्रियमपि सुखाप्तेः परिदिनं सदा
धीरो नूनं भजति यमुनां नित्यफलदाम् ॥ १ ॥
मधुवनचारिणि भास्करवाहिनि जाह्नविसङ्गिनि
सिन्धुसुते मधुरिपुभूषिणि माधवतोषिणि गोकुल-
भीतिविनाशकृते । जगदघमोचिनि मानस-
दायिनि केशवकेलिनिदानगते जय यमुने जय
भीतिनिवारिणि सङ्कटनाशिनि पावय माम् ॥२॥
अयि मधुरे मधुमोदविलासिनि शैलविदारिणि
वेगभरे परिजनपालिनि दुष्टनिषूदिनि वाञ्छितका-
मविलासधरे । व्रजपुरवासिजनार्जितपातकहारिणि
विश्वजनोद्धरिके जय यमुने जय भीतिनिवारिणि सङ्क-
टनाशिनि पावय माम् ॥ ३ ॥ अतिविपदाम्बुधिम-
ग्नंभवतापशताकुलमानसकं गतिमतिहीनमशेषज-

भयाकुलमागतपादसरोजयुगम् । ऋणमयभीतिमनि-
ष्कृतिपातककोटिशतायुतपुञ्जतरं जय यमुने जय
भीतिनिवारिणि सङ्कटनाशिनि पावय माम् ॥ ४ ॥
नवजलदद्युतिकोटिलसत्तनुहेममयाभरणाञ्चितके त-
डिदवहेलिपदाञ्चलचञ्चलशोभितपीतसुचैलधरे ।
मणिमयभूषणचित्रपटासनरञ्जितगञ्जितभानुकरे जय
यमुने जय भीतिनिवारिणि सङ्कटनाशिनि पावय
माम् ॥ ५ ॥ शुभपुलिने मधुमत्तयदूद्भवरा-
समहोत्सवकेलिभरे उच्चकुलाचलराजितमौक्तिक-
हारमयाभररोदसिके । नवमणिकोटिकभास्करक-
ञ्चुकिशोभिततारकहारयुते जय यमुने जय भीतिनि-
वारिणि सङ्कटनाशिनि पावय माम् ॥ ६ ॥ करिवर-
मौक्तिकनासिकभूषणवातचमत्कृतचञ्चलके मुखकम-
लामलसौरभचञ्चलमत्तमधुव्रतलोचनिके । मणि-
गणकुण्डललोलपरिस्फुरदाकुलगण्डयुगामलके जय
यमुने जय भीतिनिवारिणि सङ्कटनाशिनि पावय
माम् ॥ ७ ॥ कलरवनूपुरहेममयाञ्चितपादसरोरु-
हसारुणिके धिमिधिमिधिमिधिमितालविनोदित-

मानसमञ्जुलपादगते। तव पदपङ्कजमाश्रितमानवचित्तसदाखिलतापहरे जय यमुने जय भीतिनिवारिणि सङ्कटनाशिनि पावय माम् ॥ ८ ॥ भवोत्तापाम्भोधौ निपतितजनो दुर्गतियुतो यदि स्तौति प्रातः प्रतिदिनमनन्याश्रयतया। हयाह्रेषैः कामं करकुसुमपुञ्जै रविसुतां सदा भोक्ता भोगान्मरणसमये याति हरिताम् ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यविरचितं श्रीयमुनाष्टकम्।

## श्रीनर्मदाष्टकम्।

सबिन्दुसिन्धुसुस्खलत्तरङ्गभङ्गरञ्जितं द्विषत्सु पापजातजातकारिवारिसंयुतम्। कृतान्तदूतकालभूतभीतिहारिवर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ १ ॥ त्वदम्बुलीनदीनमीनदिव्यसम्प्रदायकं कलौ मलौघभारहारिसर्वतीर्थनायकम्। सुमत्स्यक-

च्छनक्रचक्रचक्रवाकशर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ २ ॥ महागभीरनीरपूरपापधूतभूतलं ध्वनत्समस्तपातकारि दारितापदाचलम् । जगल्लये महाभये मृकण्डुसूनुहर्म्यदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ३ ॥ गतं तदैव मे भयं त्वदम्बु वीक्षितं यदा मृकण्डुसूनुशौनकासुरारिसेवि सर्वदा। पुनर्भवाब्धिजन्मजं भवाब्धिदुःखवर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ४ ॥ अलक्षलक्षकिन्नरामरासुरादिपूजितं सुलक्षनीरतीरधीरपक्षिलक्षकूजितम् । वसिष्ठशिष्टपिप्पलादिकर्दमादिशर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ५ ॥ सनत्कुमारनाचिकेतकश्यपात्रिषट्पदैर्धृतं स्वकीयमानसेषु नारदादिषट्पदैः । रवीन्दुरन्तिदेवदेवराजकर्मशर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ६ ॥ अलक्षलक्षलक्षपापलक्षसारसायुधं ततस्तु जीवजन्तुतन्तुभुक्तिमुक्तिदायकम् । विरञ्चिविष्णुशङ्करस्वकीयधामवर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ ७ ॥ अहो मृतं स्वनं श्रुतं महेशकेश-

जातटे किरातसूतवाडवेषु पण्डिते शठे नटे। दुरन्त-
पापतापहारि सर्वजन्तुशर्मदे त्वदीयपादपङ्कजं न-
मामि देवि नर्मदे ॥ ८ ॥ इदं तु नर्मदाष्टकं त्रिका-
लमेव ये सदा पठन्ति ते निरन्तरं न यान्ति दुर्गतिं
कदा। सुलभ्यदेहदुर्लभं महेशधामगौरवं पुनर्भवा
नरा न वै विलोकयन्ति रौरवम् ॥ ९ ॥

इति श्रीमच्छङ्कराचार्यविरचितं
श्रीनर्मदाष्टकम्।

——:o:——

# श्रीशारदास्तुतिः।

ब्रह्मोवाच।

आरूढ़ा श्वेतहंसे भ्रमति च गगने दक्षिणे चाक्ष-
सूत्रं वामे हस्ते च दिव्याम्बरकनकमयं पुस्तकं ज्ञानग-
म्यम्। सा वीणां वादयन्ती स्वकरकरजपैः शास्त्र-
विज्ञानशब्दैः क्रीडन्ती दिव्यरूपा करकमलधरा
भारती सुप्रसन्ना ॥ १ ॥ शुक्लां ब्रह्मविचारसार-

परमामाद्यां जगद्व्यापिनीं वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्। हस्ते स्फाटिकमालिकाम्विदधतीं पद्मासने संस्थितां वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥२॥ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना। या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैस्सदा वन्दिता सा माम्पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ ३ ॥ ह्रीं ह्रीं हृद्यैकबीजे शशिरुचि कमलाकल्पविस्पष्टशोभे भव्ये भव्यानुकूले कुमतिवनदवे विश्ववन्द्याङ्घ्रिपद्मे। पद्मे पद्मोपविष्टे प्रणतजनमनोमोदसम्पादयित्रि प्रोत्सुष्टाज्ञानकूटे हरिनिजदयिते देवि संसारसारे ॥ ४ ॥ ऐं ऐं ऐं इष्टमन्त्रे कमलभवमुखाम्भोजभूतिस्वरूपे रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे। न स्थूले नाऽपि सूक्ष्मेऽप्यविदितविषये नापि विज्ञाततत्त्वे विश्वे विश्वान्तराले सुरवरनमिते निष्कले नित्यशुद्धे ॥ ५ ॥ ह्रीं ह्रीं ह्रीं जापतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते मातर्मातर्नमस्ते दह दह

जडतां देहि बुद्धिं प्रशस्ताम् । विद्ये वेदान्तगीते श्रुतिपरिपठिते मोक्षदे मुक्तिमार्गे मार्गातीतप्रभावे भव मम वरदा शारदे शुभ्रहारे ॥ ६ ॥ धीर्धीर्धीर्धारणाख्ये धृतिमतिनुतिभिर्नामभिः कीर्तनीये नित्येऽनित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे । पुण्ये पुण्यप्रवाहे हरिहरनमिते नित्यशुद्धे सुवर्णे मात्रे मात्रार्द्धतत्त्वे मतिमति मतिदे माधवप्रीतिदाने ॥७॥ ह्रीं क्लीं धीं ह्रीं सत्स्वरूपे दह दह दुरितं पुस्तकव्यग्रहस्ते सन्तुष्टाकारचित्ते स्मितमुखि सुभगे स्तम्भिनि स्तम्भविद्ये। मोहे मुग्धप्रवाहे कुरु मम कुमतिध्वान्तविध्वंसमीड्ये गीर्गौर्वाग्भारती त्वं कविवृषरसनासिद्धिदा सिद्धिविद्या ॥८॥ स्तौमि त्वां त्वाञ्च वन्दे भज मम रसनां मा कदाचित्त्यजेथा मा मे बुद्धिर्विरुद्धा भवतु न च मनो देवि मे यातु पापम् । मा मे दुःखं कदाचिद्विपदि च समयेऽप्यस्तु मे नाकुलत्वं शास्त्रे वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठा कदाचित् ॥९॥ इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो वाणीवाचस्पतेरप्यभिमतविभवो वाक्पटुर्मृष्ट-

पङ्कः। सः स्यादिष्टार्थलाभी सुतमिव सततं पालितं सा च देवी सौभाग्यन्तस्य गेहे प्रसरति कविता-विघ्नमंस्तम्प्रयाति ॥१०॥ निर्विघ्नं तस्य विद्या प्रभवति सततं चाश्रुतग्रन्थबोधः कीर्तिस्त्रैलोक्यमध्ये निवसति वदने शारदा तस्य साक्षात्। दीर्घायुर्लोकपूज्यः सकलगुणनिधिः सन्ततं राजमान्यो वाग्देव्याः सम्प्रसादात्त्रिजगति विजयी जायते सत्सभासु ॥ ११ ॥ ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः । सारस्वतो नरः पाठात्स स्यादिष्टार्थलाभवान् ॥ १२ ॥ सर्वपापविनिर्मुक्तः सुभगो लोकविश्रुतः । वाञ्छितं फलमाप्नोति लोकेऽस्मिन्नात्र संशयः ॥ १३ । ब्रह्मणेति स्वयं प्रोक्तं सरस्वत्याः स्तवं शुभम् । प्रयत्नेन पठेन्नित्यं सोऽमृतत्वाय कल्पते ॥ १४ ॥

इति श्रीतन्त्रसारे श्रीशारदास्तुतिः ।

# श्रीहरगौर्य्यष्टकम् ।

कस्तुरिकाचन्दनलेपनायै, श्मशानभस्माङ्गविलेपनाय । सत्कुण्डलायै फणिकुण्डलाय, नमः शिवायै च नमः शिवाय ॥ १ ॥ मन्दारमालाकुलितालकायै, कपालमालाङ्कितशेखराय । दिव्याम्बरायै च दिगम्बराय, नमः शिवायै च नमः शिवाय ॥२॥ चलत्कणत्कङ्कणनूपुरायै, विभ्रत्कणाभासुरनूपुराय । हेमाङ्गदायै च फणाङ्गदाय, नमः शिवायै च नमः शिवाय ॥ ३ ॥ विलोलनीलोत्पललोचनायै, विकाशपङ्केरुहलोचनाय । त्रिलोचनायै विषमेक्षणाय, नमः शिवायै च नमः शिवाय ॥ ४ ॥ प्रपन्नपृष्ठे सुखदाश्रयायै, त्रैलोक्यसंहारकताण्डवाय । कृतस्मरायै विकृतस्मराय, नमः शिवायै च नमः शिवाय ॥ ५ ॥ चाम्पेयगौरार्द्धशरीरकायै, कर्पूरगौरार्द्धशरीरकाय । धम्मिल्लवत्यै च जटाधराय, नमः शिवायै च नमः शिवाय ॥ ६ ॥ अम्भो-

धरश्यामलकुन्तलायै, विभूतिभूषाङ्गजटाधराय । जगज्जनन्यै जगदेकपित्रे, नमः शिवायै च नमः शिवाय ॥ ७ ॥ सदा शिवानां परिभूषणायै, सदा शिवानां परिभूषणाय । शिवान्वितायै च शिवान्विताय, नमः शिवायै च नमः शिवाय ॥ ८ ॥

इति श्रीतन्त्रसारे श्रीहरगौर्य्यष्टकम् ।

———:o:———

## श्रीहरिहरात्मकस्तोत्रम् ।

गोविन्द माधव मुकुन्द हरे मुरारे शम्भो शिवेश शशिशेखर शूलपाणे । दामोदराच्युत जनार्दन वासुदेव त्याज्या भटा य इति सन्ततमामनन्ति ॥१॥ गङ्गाधरान्धकरिपो हर नीलकण्ठ वैकुण्ठ कैटभरिपो कमठाब्जपाणे । भूतेश खण्डपरशो मृड चण्डिकेश त्याज्या भटा य इति सन्ततमामनन्ति ॥ २ ॥ विष्णो नृसिंह मधुसूदन चक्रपाणे गौरीपते गिरिश शङ्कर चन्द्रचूड । नारायणासुरनिवर्हण शार्ङ्गपाणे

त्याज्या भटा य इति सन्ततमामनन्ति॥३॥ मृत्युञ्जयो-
ग्रविषभेदक्ष कामशत्रो श्रीकान्त पीतवसनाम्बुदनील
शौरे। ईशान कृत्तिवसन त्रिदशैकनाथ त्याज्या भटा
य इति सन्ततमामनन्ति ॥ ४ ॥ लक्ष्मीपते मधुरिपो
पुरुषोत्तमाद्य श्रीकण्ठ दिग्वसन शान्त पिनाकपाणे।
आनन्दकन्द धरणीधर पद्मनाभ त्याज्या भटा
य इति सन्ततमामनन्ति ॥ ५ ॥ सर्वेश्वर त्रिपुर-
सूदन देवदेव ब्रह्मण्यदेव गरुडध्वज शङ्खपाणे ।
त्र्यक्षोरगाभरण बालमृगाङ्कमौले त्याज्या भटा य
इति सन्ततमामनन्ति ॥ ६ ॥ श्रीराम राघव रमेश्वर
रावणारे भूतेश मन्मथरिपो प्रमथाधिनाथ । चाणू-
रमर्दन हृषीकपते मुरारे त्याज्या भटा य इति सन्त-
तमामनन्ति ॥७॥ शूलिन् गिरीश रजनीशकलावतंस
कंसप्रणाशन सनातन केशिनाश ॥ भर्ग त्रिनेत्र भव
भूतपते पुरारे त्याज्या भटा य इति सन्ततमानन्ति ॥८॥
गोपीपते यदुपते वसुदेवसूनो कर्पूरगौर वृषभध्वज
भालनेत्र । गोर्द्धनोद्धरण धर्मधुरीण गोप त्याज्या
भटाय इति सन्ततमामानन्ति ॥९॥ स्थाणो त्रिलोचन

पिनाकधर स्मरारे कृष्णानिरुद्ध कमलाकर कल्मषारे । विश्वेश्वर त्रिपथगार्द्रजटाकलाप त्याज्या भटा य इति सन्ततमामनन्ति ॥ १० ॥ अष्टोत्तराधिकशतेन सुचारुनाम्नां संदर्भितां ललितरत्नकदम्बकेन । सन्नायकां दृढगुणां निजकण्ठगां यः कुर्यादिमां स्रजमहो स यमं न पश्येत् ॥ ११ ॥ गणावूचतुः । इत्थं द्विजेन्द्र निजभृत्यगणान्सदैव संशिक्षयेदवनिगान्स हि धर्मराजः । अन्येऽपि ये हरिहराङ्कधरा धरायां ते दूरतः पुनरहो परिवर्जनीयाः ॥ १२ ॥ अगस्त्य उवाच । यो धर्मराजरचितां ललितप्रबन्धां नामावलिं सकलकल्मषबीजहन्त्रीम् । धीरोऽत्र कौस्तुभभृतः शशिभूषणस्य नित्यं जपेत्स्तनरसं न पिबेत्स मातुः ॥१३॥ इति श्रुण्वन्कथां रम्यां शिवशर्मा प्रियेऽनघाम् । प्रहर्षवक्त्रः पुरतो ददर्शाप्सरसां पुरीम्॥ १४ ॥

इति श्रीस्कन्दपुराणे काशीखण्डे धर्मराजविरचितं हरिहराष्टोत्तरशतनामावलिस्तोत्रम् ।

—o—

# श्रीआर्त्तत्राणनारायणाष्टादशकम् ।

प्रह्लाद प्रभुरस्ति चेत् तव हरिः सर्वत्र मे दर्शय, स्तम्भे चैनमिति ब्रुवन्तमसुरं तत्राविरासीद्धरिः । वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमावेदयन्नार्त्त-त्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १ ॥ श्रीरामाय विभीषणोऽयमधुना त्वार्त्तो भयादागतः, सुग्रीवानय पालयेऽहमधुना पौलस्त्यमेवागतम् । एवं योऽभयमस्य सर्वविदितं लङ्काधिपत्यं ददा-वार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २ ॥ नक्रग्रस्तपदं समुद्यतकरं ब्रह्मेश देवेश मां पाहीति प्रचुरार्त्तरावकरिणं देवेश शक्तीश च । मा शोचेति रक्ष नक्रवदनाच्चक्रश्रिया तत्क्षणादार्त्त-त्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ३ ॥ हा कृष्णाच्युत हा कृपाजलनिधे हा पाण्डवानां गते, क्वासि क्वासि सुयोधनादवगतां हा रक्ष मां द्रौपदीम् । इत्युक्तोऽक्षयवस्त्ररक्षिततनुं योऽरक्षदा-

पद्गतामार्त्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ ४ ॥ यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनम् यन्नामामृतपूरणं च पिबतां सन्तापसंहारकम् । पाषाणश्च यदङ्घ्रितो निजवधूरूपं मुनेराप्तवानार्त्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ ५ ॥ यन्नामश्रुतिमात्रतोऽपरिमितं संसारवाराान्निधिं त्यक्त्वा गच्छति दुर्जनोऽपि परमं विष्णोः पदं शाश्वतम् । तस्यैवाद्भुतकारणस्य जगतां नाथस्य दासोऽस्म्यहमार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ६ ॥ पित्रा भ्रातरमुत्तमाङ्कगमितं भक्तोत्तमं यो ध्रुवं दृष्ट्वा तत्सममारुरुक्षुमुदितं मात्रावमानं गतं । योऽदात् तं शरणागतं तु तपसा हेमाद्रिसिंहासनं ह्यार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ७ ॥ नाथेति श्रुतयो न तत्त्वमतयो घोषस्थिता गोपिका, जारिण्यः कुलजातिधर्म्मविमुखा अध्यात्मभावं ययुः । भक्तिर्यस्य ददाति मुक्तिमतुलां जारस्य यः सद्गतिर्ह्यार्त्तत्राणपरायणः स भगवान्नारायणो मे

गतिः ॥ ८ ॥ क्षुत्तृष्णार्त्तसहस्रशिष्यसहितं दुर्वाससं क्षोभितं द्रौपद्या भयभक्तियुक्तमनसा शाकं स्वहस्तार्पितम् । भुक्त्वाऽतर्पयदात्मवृत्तिमखिलामावेदयन् यः पुमान्नार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ९ ॥ येनारक्षि रघूत्तमेन जलधेस्तीरे दशास्यानुजस्त्वायातं शरणं रघूत्तम विभो रक्षातुरं मामिति । पौलस्त्येन निराकृतोऽथ सदसि भ्रात्रा च लङ्कापुरे ह्यार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १० ॥ येनावाहि महाहवे वसुमती संवर्त्तकाले महालीलाक्रोड़वपुर्धरेण हरिणा नारायणेन स्वयम् । यः पापिष्ठमसुरमचिराद्धत्वा च योऽगात् प्रियमार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ११ ॥ योऽद्यासौ भुवनत्रये मधुपतिर्भर्त्ता नराणां कुले, राधया अकरोद्रते रतिमनःपूर्त्तिं सुरेन्द्रानुजः । यो वा रक्षति दीनपाण्डुतनयान् नाथेति भीतिं गतानार्त्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ १२ ॥ यः सान्दीपनिदेशतश्च

तनयं लोकान्तरात् सन्नतं, चानीय प्रतिपाद्य पुत्रमरणादुज्जृम्भमाणार्त्तये । सन्तोषं जनयन्नमेयमहिमा पुत्रार्थसम्पादनादार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १३ ॥ यन्नामस्मरणादघौघसहितो विप्रः पुराऽजामिलः, प्राणान्मुक्तिमशेषितामनु च यः पापौघदावार्त्तियुक् । सद्यो भागवतोत्तमात्मनि मतिं प्रापाम्बरीषाभिधश्चार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १४ ॥ योऽरक्तद्वसनादिनित्यरहितं विप्रं कुचैलाभिधं दीनादीनचकोरपालनपरः श्रीशङ्खचक्रोज्ज्वलः । तज्जीर्णाम्बरमुष्टिमात्रपृथुकानादाय भुक्त्वा त्वणादार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १५ ॥ यत्कल्याणगुणाभिराममलं मन्त्राणि संशिक्षते, यच्छ्वासेति पतिप्रतिष्ठितमिदं विश्वं वदन्त्यागमः । यो योगीन्द्रमनःसरोरुहतमःप्रध्वंसचिद्भानुमानार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १६ ॥ कालिन्दीहृदयाभिरामपुलिने पुण्ये जगन्मङ्गले, चन्द्राम्भोजवटे पुटे परिसरे धात्रा

समाराधिते श्रीरङ्गे भुजगेन्द्रभोगशयने शेते सदा यः पुमानार्त्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ १७ ॥ वात्सल्यादभयप्रदानसमयादार्त्तार्त्तिनिर्वापणादौदार्य्यादघशोषणादगणितश्रेयःपदप्रापणात् । सेव्यः श्रीपतिरेव सर्वजगतामेते हि तत्साक्षिणः, प्रह्लादश्च विभीषणश्च करिराट् पांचाल्यहल्याध्रुवाः ॥ १८ ॥

इति श्रीमच्छङ्कराचार्यविरचितं श्रीआर्त्तत्राणनारायणाष्टादशकम् ।

:0:

## श्रीहरिस्तुतिः ।

स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् । यस्मिन् दृष्टे नश्यति तत्संसृतिचक्रं तं संसारध्वान्तविनाशं हरिमीडे ॥१॥ यस्यैकांशादित्थमशेषं जगदेतत्प्रादुर्भूतं येन पिनद्धं पुनरित्थम् । येन व्याप्तं येन विबुद्धं सुखदुःखैस्तं संसारध्वान्तविनाशं हरिमीडे ॥ २ ॥ सर्वज्ञो यो

यश्च हि सर्वः सकलो यो यश्चाऽनन्दोऽनन्तगुणो यो गुणधामा । यश्चाव्यक्तो व्यस्तसमस्तः सदसद्यस्तं संसारध्वान्तविनाशं हरिमीडे ॥ ३ ॥ यस्मादन्यन्नास्त्यपि नैनं परमार्थं दृश्यादन्यो निर्विषयज्ञानमयत्वात् । ज्ञातृज्ञानज्ञेयविहीनोपि सदाज्ञस्तं संसारध्वान्तविनाशं हरिमीडे ॥४॥ आचार्येभ्यो लब्धसुसूक्ष्माच्युततत्त्वा वैराग्येणाभ्यासबलाच्चैव द्रढिम्ना । भक्त्यैकाग्र्यध्यानपरा यं विदुरीशं तं संसारध्वान्तविनाशं हरिमीडे ॥ ५ ॥ प्राणानायम्योमिति चित्तं हृदि रुद्ध्वा नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य । क्षीणे चित्ते भादृशिरस्मीति विदुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ ६ ॥ यं ब्रह्माख्यं देवमनन्यं परिपूर्णं हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम् । ध्यात्वात्मस्थं ब्रह्मविदो यं विदुरीशं तं संसारध्वान्तविनाशं हरिमीडे ॥ ७ ॥ मात्रातीतं स्वात्मविकाशात्मविबोधं ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यम् । भावग्राह्यानन्दमनन्यं च विदुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ ८ ॥ यद्यद्वेद्यंवस्तु सतत्त्वं विषयाख्यं तत्तद्ब्र-

ह्मैवेति विदित्वा तदहं च। ध्यायन्त्येवं यं सन-
काद्या मुनयोऽजं तं संसारध्वान्तविनाशं हरिमीडे
॥ ९॥ यद्यद्वेद्यं तत्तदहं नेति विहाय स्वात्मज्योति-
र्ज्ञानमयानन्दमवाप्य। तस्मिन्नस्मीत्यात्मविदो यं
विदुरीशं तं संसारध्वान्तविनाशं हरिमीडे॥ १०॥
हित्वा हित्वा दृश्यमशेषं सविकल्पं मत्वा शिष्टं
भादृशिमात्रं गगनाभम्। त्यक्त्वा देहं यं प्रविशन्त्य-
च्युतभक्तास्तं संसारध्वान्तविनाशं हरिमीडे॥११॥
सर्वत्रास्ते सर्वशरीरी न च सर्वः सर्वं वेत्त्येवेह न
यं वेत्ति च सर्वः। सर्वत्रान्तर्यामितयेत्थं यमय-
न्यस्तं संसारध्वान्तविनाशं हरिमीडे॥ १२॥ सर्वं
दृष्ट्वा स्वात्मनि युक्त्या जगदेतद्दृष्ट्वात्मानं चैवमजं
सर्वजनेषु। सर्वात्मैकोऽस्मीति विदुर्यं जनहृत्स्थं तं
संसारध्वान्तविनाशं हरिमीडे॥१३॥ सर्वत्रैकः पश्यति
जिघ्रत्यथ भुङ्क्ते स्प्रष्टा श्रोता बुध्यति चेत्याहुरिमं यम्।
साक्षी चास्ते कर्तृषु पश्यन्निति चाऽन्ये तं संसार-
ध्वान्तविनाशं हरिमीडे॥ १४॥ पश्यन् शृण्वन्नत्र
विजानन् रसयन् सन् जिघ्रन् बिभ्रद्देहमिमं जीवत-

येत्थं। इत्यात्मानं यं विदुरीशं विषयज्ञं तं संसार-
ध्वान्तविनाशं हरिमीडे ॥१५॥ जाग्रद्दृष्ट्वा स्थूलपदा-
र्थानथ मायां दृष्ट्वा स्वप्नेऽथापि सुषुप्तौ सुखनिद्राम्।
इत्यात्मानं वीक्ष्य मुदास्ते च तुरीये तं संसारध्वान्त-
विनाशं हरिमीडे॥१६॥ पश्यन् शुद्धोप्यक्षर एको गुण-
भेदान्नानाकारान् स्फाटिकवद्भाति विचित्रः। भिन्न-
श्छिन्नश्चायमजः कर्मफलैर्यस्तं संसारध्वान्तविनाशं
हरिमीडे ॥ १७ ॥ ब्रह्माविष्णू रुद्रहुताशौ रविचन्द्रा-
विन्द्रो वायुर्यज्ञ इतीत्थं परिकल्प्य। एकं सन्तं यं बहु-
धाहुर्मतिभेदात्तं संसारध्वान्तविनाशं हरिमीडे ॥१८॥
सत्यं ज्ञानं शुद्धमनन्तं व्यतिरिक्तं शान्तं गूढं निष्कल-
मानन्दमनन्यम्। इत्याहादौ यं वरुणोऽसौ भृगवेऽजं
तं संसारध्वान्तविनाशं हरिमीडे ॥ १९ ॥ कोशाने-
तान्पंच रसादीनतिहाय ब्रह्मास्मीति स्वात्मनि निश्चि-
त्य दृशिस्थः। पित्रादिष्टो वेद भृगुर्यं यजुरन्ते तं
संसारध्वान्तविनाशं हरिमीडे ॥ २० ॥ येना-
विष्टो यस्य च शक्त्या यदधीनः क्षेत्रज्ञोऽयं कार-
यिता जन्तुषु कर्तुः। कर्त्ता भोक्तात्मात्र हि चिच्छ-

कृत्यधिरूढस्तं संसारध्वान्तविनाशं हरिमीडे ॥२१॥
सृष्ट्वा सर्वं स्वात्मतयैवेत्थमतर्क्यं व्याप्याथान्तः कृत्स्नमिदं सृष्टमशेषम् । सच्च त्यच्चाभूत्परमात्मा स य एकस्तं संसारध्वान्तविनाशं हरिमीडे ॥ २२ ॥
वेदान्तैश्चाध्यात्मिकशास्त्रैश्च पुराणैः शास्त्रैश्चान्यैः सात्त्वततन्त्रैश्च यमीशम् । दृष्ट्वाथान्तश्चेतसि बुद्ध्वा विविशुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ २३ ॥
श्रद्धाभक्तिध्यानशमाद्यैर्यतमानैर्ज्ञातुं शक्यो देव इहैवाशु य ईशः । दुर्विज्ञेयो जन्मशतैश्चापि विना तैस्तं संसारध्वान्तविनाशं हरिमीडे ॥ २४ ॥ यस्यातर्क्यं स्वात्मविभूतेः परमार्थं सर्वं खल्वित्यत्र निरुक्तं श्रुतिविद्भिः । तज्जादित्वादब्धितरङ्गाभमभिन्नं तं संसारध्वान्तविनाशं हरिमीडे ॥ २५ ॥
दृष्ट्वा गीतास्वक्षरतत्त्वं विधिनाजं भक्त्या गुर्व्याभ्य हृदिस्थं दृशिमात्रम् । ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ २६ ॥ क्षेत्रज्ञत्वं प्राप्य विभुः पञ्चमुखैर्यो भुङ्क्तेऽजस्रं भोग्यपदार्थान् प्रकृतिस्थः । क्षेत्रे क्षेत्रेऽप्स्विव-

न्दुवदेको बहुधाऽऽस्ते तं संसारध्वान्तविनाशं हरिमीडे ॥ २७ ॥ युक्त्यालोड्य व्यासवचांस्यत्र हि लभ्यः क्षेत्रक्षेत्रज्ञान्तरविद्भिः पुरुषाख्यः । योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ २८ ॥ एकीकृत्यानेकशरीरस्थमिमं ज्ञं यं विज्ञायेहैव स एवाशु भवन्ति । यस्मिंल्लीना नेह पुनर्जन्म लभन्ते तं संसारध्वान्तविनाशं हरिमीडे ॥ २९ ॥ द्वन्द्वैकत्वं यच्च मधुब्राह्मणवाक्यैः कृत्वा शक्रोपासनमासाद्य विभूत्या । योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ ३० ॥ योऽयं देहे चेष्टयितान्तःकरणस्थः सूर्ये चासौ तापयिता सोऽस्म्यहमेव । इत्यात्मैक्योपासनया यं विदुरीशं तं संसारध्वान्तविनाशं हरिमीडे ॥ ३१ ॥ विज्ञानांशो यस्य सतः शक्त्यधिरूढो बुद्धिर्बुध्यत्यत्र बहिर्बोध्यपदार्थान् । नैवान्तस्थं बुध्यति यं बोधयितारं तं संसारध्वान्तविनाशं हरिमीडे ॥ ३२ ॥ कोऽयं देहे देव इतीत्थं सुविचार्य ज्ञाता श्रोतानन्दयिता चैष हि देवः । इत्यालोच्य

ज्ञांश इहास्मीतिविदुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ ३३ ॥ को ह्येवान्यादात्मनि न स्यादयमेष ह्येवानन्दः प्राणिति चापानिति चेति। इत्यस्तित्वं वक्त्युपपत्त्या श्रुतिरेषा तं संसारध्वान्तविनाशं हरिमीडे ॥३४॥ प्राणो वाहं वाक्श्रवणादीनि मनो वा बुद्धिर्वाहं व्यस्त उताहोऽपि समस्तः। इत्यालोच्य ज्ञप्तिरिहास्मीति विदुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ ३५ ॥ नाहं प्राणो नैव शरीरं न मनोऽहं नाहं बुद्धिर्नाहमहङ्कारधियौ च। योऽत्र ज्ञांशः सोऽस्म्यहमेवेति विदुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ ३६ ॥ सत्तामात्रं केवलविज्ञानमजं सत्सूक्ष्मं नित्यं तत्त्वमसीत्यात्मसुताय। साम्नामन्ते प्राह पिता यं विभुमाद्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ ३७ ॥ मूर्त्तामूर्ते पूर्वमपोह्याथ समाधौ दृश्यं सर्वं नेति च नेतीति विहाय। चैतन्यांशे स्वात्मनि सन्तं च विदुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥ ३८ ॥ ओतं प्रोतं यत्र च सर्वं गगनान्तं योऽस्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः। ज्ञातातोऽन्यो नेत्युपलभ्यो

न च वेद्यस्तं संसारध्वान्तविनाशं हरिमीडे ॥ ३९ ॥ तावत्सर्वं सत्यमिवाभाति यथैतद्यावत्सोऽस्मीत्यात्मनि यो ज्ञो न हि दृष्टः। दृष्टे तस्मिन् सर्वमसत्यं भवतीदं तं संसारध्वान्तविनाशं हरिमीडे ॥ ४० ॥ रागामुक्तं लोहयुतं हेम यथाग्नौ योगाष्टाङ्गैरुज्ज्वलितज्ञानमयाग्नौ। दग्ध्वात्मानं ज्ञं परिशिष्टं च विदुर्यं तं संसारध्वान्तविनाशं हरिमीडे ॥४१॥ यं विज्ञानज्योतिषमाद्यं सुविभातं हृद्यर्केन्द्वग्न्योकसमीड्यं तडिदाभम्। भक्त्याराध्येहैव विशन्त्यात्मनि सन्तं तं संसारध्वान्तविनाशं हरिमीडे ॥ ४२ ॥ पायाद्भक्तं स्वात्मनि सन्तं पुरुषं यो भक्त्या स्तौतीत्याङ्गिरसं विष्णुरिमं माम्। इत्यात्मानं स्वात्मनि संहृत्य सदैकस्तं संसारध्वान्तविनाशं हरिमीडे ॥ ४३ ॥ इत्थं स्तोत्रं भक्तजनेड्यं भवभीतिध्वान्तार्काभं भगवत्पादीयमिदं यः। विष्णोर्लोकं पठति शृणोति व्रजति ज्ञो ज्ञानं ज्ञेयं स्वात्मनि चाप्नोति मनुष्यः॥४४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्यविरचिता श्रीहरिस्तुतिः।

---

# श्रीपञ्चरत्नमालिका ।

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्य-
ताम् । पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीय-
तामात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्य-
ताम् ॥ १ ॥ सङ्गः सत्सु विधीयतां भगवतो भक्ति-
र्दृढा धीयतां शान्त्यादिः परिचीयतां दृढतरं कर्माशु
सन्न्यस्यताम् । सद्विद्वानुपसर्पतामनुदिनं तत्पादुके
सेव्यतां ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समा-
कर्ण्यताम् ॥ २ ॥ वाक्यार्थश्च विचार्यतां श्रुतिशिरः
पक्षः समाश्रीयतां दुस्तर्कात्सुविरम्यतां श्रुतिमत-
स्तर्कोऽनुसन्धीयताम् । ब्रह्मास्मीति विभाव्यताम-
हरहो गर्वः परित्यज्यतां देहेऽहंमतिरुज्झ्यतां बुध-
जनैर्वादः समुत्सृज्यताम् ॥३॥ क्षुद्व्याधिश्च चिकि-
त्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां स्वाद्वन्नं न च
याच्यतां विधिवशात्प्राप्तेन सन्तुष्यताम् । औदासीन्य-
मभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यतां शीतोष्णादि

विषह्यतां न तु वृथा वाक्यं समुच्चार्यताम् ॥ ४ ॥
एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम्
॥५॥ यः श्लोकपञ्चकमिदं पठते मनुष्यः सञ्चिन्तयत्य-
नुदिनं स्थिरतामुपेत्य । तस्याशु संसृतिदावानलतीव्र-
घोरतापः प्रशान्तिमुपयाति चितिप्रसादात् ॥ ६ ॥

इति श्रीमच्छङ्कराचार्यविरचिता
श्रीपंचरत्नमालिका ।

---

# श्रीदक्षिणामूर्तिस्तोत्रम् ।

---

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षी कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥१॥ बी-

जस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुनर्माया-
कल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् । माया-
वीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया तस्मै
श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ २ ॥ यस्यै
व स्फुरणं सदात्मकमसत्कल्पार्थकं भासते साक्षा-
त्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् ।
यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवाम्भोनिधौ
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ३ ॥
नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं ज्ञानं
यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते । जाना-
मीति तमेव भान्तमनुभात्येतत्समस्तं जगत्तस्मै
श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ४ ॥ देहं
प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वा-
दिनः । मायाशक्तिविलासकल्पितमहाव्यामोह-
संहारिणे तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणा-
मूर्तये ॥ ५ ॥ राहुग्रस्तदिवाकरेन्दुसदृशो माया
समाच्छादनात्सन्मात्रः करणोपसंहरणतो योऽभूत्

सुषुप्तः पुमान् । प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तये ॥ ६ ॥ बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि व्यावृत्तास्वनुवर्त्तमानमहमित्यन्तःस्फुरन्तं सदा । स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तये ॥७॥ विश्वं पश्यति कार्य्यकारणतया स्वस्वामिसम्बन्धतः शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः । स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामितस्तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तये ॥ ८ ॥ भूरम्भास्यनलोऽनिलाम्बरमहर्नाथो हिमांशुः पुमानित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् । नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभोस्तस्मै श्रीगुरुमूर्त्तये नम इदं श्रीदक्षिणामूर्त्तये ॥९॥ सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिंस्तवे तेनास्य श्रवणात्तथार्थमननाद्ध्यानाच्च संकीर्त्तनात् । सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः

सिद्ध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम्
॥१०॥ वटविटपिसमीपे भूमिभागे निषण्णं सकल-
मुनिजनानां ज्ञानदातारमारात् । त्रिभुवनगुरुमीशं द-
क्षिणामूर्तिदेवंजननमननदुःखच्छेददक्षं नमामि ॥११॥
चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा । गुरोस्तु
मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥ १२ ॥ ॐ
नमः प्रणवार्थाय शुद्धज्ञानैकमूर्तये । निर्मलाय
प्रशान्ताय दक्षिणामूर्त्तये नमः ॥ १३ ॥ निधये सर्व-
विद्यानां भिषजे भवरोगिणाम् । गुरवे सर्वलोकानां
दक्षिणामूर्त्तये नमः ॥१४॥ मौनव्याख्याप्रकटितपर-
ब्रह्मतत्त्वं युवानं वर्षिष्ठान्तेवसदृषिगणैरावृतं ब्रह्मनि-
ष्ठैः । आचार्येन्द्रं करकलितचिन्मुद्रमानन्दरूपं स्वा-
त्मारामं मुदितनयनं दक्षिणामूर्तिमीडे ॥ १५ ॥

इति श्रीमत्परमहंसपरिव्राजकचार्यश्रीम-
च्छङ्कराचार्य्यविरचितं श्रीदक्षिणा-
मूर्तिस्तोत्रम् ।

---

# ओंकारस्तोत्रम् ।

अकारात्मकः सृष्टिकर्ता स्वयम्भूरुकारात्मकः पालकश्चक्रपाणिः । मकारात्मकः शङ्करः शं तनोति तमोङ्कारमादिस्वरूपं नमामि ॥ १ ॥ अकारे स्थितं देहिनां स्थूलकर्म उकारे स्थितः सूक्ष्मसद्भक्तिभावः । मकारे स्थितं कारणं ज्ञानपूर्णं तमोङ्कारमादिस्वरूपं नमामि ॥ २ ॥ अकाराश्रितं विश्वमूलाश्रयं सत् उकाराश्रितं सर्वभूतान्तरं चित् । मकाराश्रितः शुद्ध आनन्दकन्दस्तमोङ्कारमादिस्वरूपं नमामि ॥ ३ ॥ अकारस्तु सत्त्वं स्वयं ब्रह्मसंस्थं उकारो रजः क्षत्रिये सन्निविष्टं । मकारो विषां दृश्यते तत्तमः स्यात्तमोङ्कारमादिस्वरूपं नमामि ॥ ४ ॥ अकारस्तु पाताललोकाख्यको भूरुकारो भुवर्भूमिलोकप्रसिद्धः । मकारस्तु स्वः कथ्यते स्वर्गलोकस्तमोङ्कारमादिस्वरूपं नमामि ॥ ५ ॥ अखण्डं निजं निर्गुणं निर्विकल्पं विभुं व्यापकं सर्व-

वेदादिमूलम् । स्मरन्मुच्यते पापतापान्मनुष्यस्त-
मोङ्कारमादिस्वरूपं नमामि ॥ ६ ॥

इति श्रीतन्त्रसारे ओंकारस्तोत्रम् ।

---

# ब्रह्मस्तोत्रम् ।

—:o:—

ओं नमस्ते सते सर्वलोकाऽऽश्रयाय । नमस्ते चिते विश्वरूपात्मकाय । नमोऽद्वैततत्त्वाय मुक्तिप्रदाय नमो ब्रह्मणे व्यापिने निर्गुणाय ॥ १ ॥ त्वमेकं शरण्यं त्वमेकं वरेण्यं त्वमेकं जगत्कारणं विश्वरूपम् । त्वमेकं जगत्कर्तृ पातृ प्रहर्तृ त्वमेकं परं निश्चलं निर्विकल्पम् ॥२॥ भयानां भयं भीषणं भीषणानां गतिः प्राणिनां पावनं पावनानाम् । महोच्चैः पदानां नियन्तृ त्वमेकं परेषां परं रक्षकं रक्षकानाम् ॥३॥परेश ! प्रभो ! सर्वरूपाऽविनाशिन् ! अनिर्देश्य ! सर्वेन्द्रियाऽगम्य ! सत्य !। अचिन्त्याऽक्षर ! व्यापकाऽव्यक्ततत्त्व ! जगद्भासकाऽधीश ! पायादपा-

यात् ॥ ४ ॥ तदेकं स्मरामस्तदेकं जपामस्तदेकं जगत्साक्षिरूपं नमामः । सदेकं निधानं निरालम्बमीशं भवाम्भोधिपोतं शरण्यं व्रजामः ॥५॥

इति श्रीमहानिर्वाणतन्त्रे ब्रह्मस्तोत्रम् ।

—:०:—

समाप्तोयं स्तोत्रकुसुमाञ्जलिः ।

—०—

श्रीमहामण्डल शास्त्रप्रकाशक विभागके

# स्थिर ग्राहकोंके नियम ।

(१) इस समय हमारी ग्रन्थमालामें निम्नलिखित ग्रन्थ प्रकाशित हुए हैं:—

| | |
|---|---|
| मंत्रयोगसंहिता ( भाषानुवादसहित ) | १) |
| भक्तिदर्शन ( भाषाभाष्यसहित ) | १) |
| योगदर्शन (भाषाभाष्यसहित नूतन संस्करण) | २) |
| नवीन दृष्टिमें प्रवीण भारत ( नूतनसंस्करण ) | १) |
| दैवीमीमांसादर्शन प्रथम भाग (भाषाभाष्यसहित) | १॥) |
| कल्किपुराण ( भाषानुवादसहित ) | १) |
| उपदेश पारिजात ( संस्कृत ) | ॥) |
| गीतावली | ॥) |
| भारतधर्ममहामण्डल रहस्य (नूतनसंस्करण) | १) |
| सन्न्यासगीता ( भाषानुवादसहित ) | ॥।) |
| गुरुगीता ( भाषानुवादसहित नूतन संस्करण ) | ।) |
| धर्मकल्पद्रुम प्रथम खण्ड | २) |
| ,, द्वितीय खण्ड | १॥) |
| ,, तृतीय खण्ड ( नूतनसंस्करण ) | २) |
| ,, चतुर्थ खण्ड | २) |
| ,, पञ्चम खण्ड | २) |
| ,, षष्ठ खण्ड | १॥) |

श्रीमद्भगवद्गीता प्रथम खण्ड (भाषाभाष्यसहित) १)
सूर्य्यगीता ( भाषानुवादसहित ) ॥)
शम्भुगीता ( भाषानुवादसहित ) ॥।)
शक्तिगीता ( भाषानुवादसहित ) ॥।)
धीशगीता ( भाषानुवादसहित ) ॥)
विष्णुगीता ( भाषानुवादसहित ) ॥।)
रामगीता (सानुवाद, वैज्ञानिक टिप्पणी सहित) २)

( २ ) इनमेंसे जो कमसे कम ४) मूल्यकी पुस्तक पूरे मूल्यमें खरीदेंगे अथवा स्थिर ग्राहक होनेका चन्दा १) भेज देंगे उन्हें शेष और आगे प्रकाशित होनेवाली सब पुस्तकें ३/४ मूल्यमें दी जायंगी।

( ३ ) स्थिर ग्राहकोंको मालामें ग्रथित होनेवाली हर एक पुस्तक खरीदनी होगी। जो पुस्तक इस विभाग द्वारा छापी जायगी, वह एक विद्वानोंकी कमेटी द्वारा पसन्द करा ली जायगी।

( ४ ) हर एक ग्राहक अपना नम्बर लिखकर या दिखाकर हमारे कार्यालयसे अथवा जहाँ वह रहता हो वहां हमारी शाखा हो तो वहांसे, स्वल्प मूल्यपर पुस्तकें खरीद सकेगा।

( ५ ) जो धर्मसभा इस धर्म्मकार्य्यमें सहायता

करना चाहे और जो सज्जन इस ग्रन्थमालाके स्थायी ग्राहक होना चाहें वे मेरे नाम पत्र भेजनेकी कृपा करें।

गोविन्द शास्त्री दुगवेकर,
अध्यक्ष शास्त्रप्रकाशक विभाग
महामण्डल भवन, जगत्गंज, बनारस।

---

## श्रीमहामण्डलस्थ उपदेशक-महाविद्यालय।

श्रीभारतधर्ममहामण्डल प्रधान कार्यालय, काशीमें साधु और गृहस्थ धर्म्मवक्ता प्रस्तुत करनेके अर्थ श्रीमहामण्डल-उपदेशक महाविद्यालय नामक विद्यालय स्थापित हुआ है। जो साधुगण दार्शनिक और धर्म्मसम्बन्धी ज्ञान लाभ करके अपने साधु-जीवनको कृतकृत्य करना चाहें और जो विद्वान् गृहस्थ धार्मिक शिक्षा लाभ करके धर्म्मप्रचार द्वारा देशकी सेवा करते हुए अपना जीवन निर्वाह करना चाहें वे निम्नलिखित पतेपर पत्र भेजें।

प्रधानाध्यक्ष, श्रीभारतधर्म्ममहामण्डल
प्रधान कार्यालय,
जगत्गंज, बनारस (छावनी)।

# श्रीविश्वनाथ-अन्नपूर्णा-दानभण्डार ।

श्रीभारतधर्म्ममहामण्डल प्रधान कार्य्यालय काशीमें दीनदुःखियोंके क्लेशनिवारणार्थ यह सभा स्थापित की गयी है। इस सभाके द्वारा अतिविस्तृत रीतिपर शास्त्र प्रकाशनका कार्य्य प्रारम्भ किया गया है। इस सभाके द्वारा धर्म्मपुस्तिका पुस्तकादि यथासम्भव विना मूल्य वितरण करनेका भी विचार रक्खा गया है। इस दानभण्डारके द्वारा महामण्डल द्वारा प्रकाशित तत्त्वबोध, साधुओंका कर्त्तव्य, धर्म्म और धर्म्माङ्ग, दानधर्म्म, नारीधर्म्म, महामण्डलकी आवश्यकता आदि कई एक हिन्दी-भाषाके धर्म्मग्रन्थ और अंग्रेजी भाषाके कई एक ट्रैक्ट विना मूल्य योग्य पात्रोंको बांटे जाते हैं। पत्राचार करनेपर विदित हो सकेगा। शास्त्र प्रकाशनकी आमदनी इसी दानभण्डारमें दीनदुःखियोंके दुःखमोचनार्थ व्यय की जाती है। इस सभामें जो दान करना चाहें या किसी प्रकार पत्राचार करना चाहें वे निम्न लिखित पतेपर पत्र भेजें।

सेक्रेटरी—श्रीविश्वनाथ-अन्नपूर्णा-दानभण्डार,
श्रीभारतधर्म्ममहामण्डल प्रधान कार्य्यालय,
जगतगंज, बनारस (छावनी)

# आर्य्यमहिला।

( श्रीमती महाराणी खैरीगढ़ द्वारा सम्पादित )

यह त्रैमासिक पत्रिका श्रीआर्यमहिला हितकारिणीमहापरिषद्की मुखपत्रिकारूपसे नियमित प्रकाशित होती है।

हिन्दीभाषा प्रेमियोंने इसकी, हिन्दी साहित्य, सनातनधर्म्म और देशोन्नतिकी उत्तम पत्रिकाओंकी श्रेणीमें गणना की है।

नाना प्रकारके त्रिवर्ण तथा एक वर्णके मनोहर और अपूर्व भावपूर्ण अनेक चित्रोंसे तथा धर्मोन्नति, समाजोन्नति, विद्योन्नति और नाना विषयोंके मौलिक लेखोंसे यह पत्रिका सदा पूर्ण रहती है और महापरिषद्के सभ्य और सभ्यामात्रके पास विना मूल्य पहुंचती है। आर्यमहिलाएं समर्थ होने पर ५) वार्षिक और असमर्थ होने पर ३) तीन वार्षिक चन्दा देकर सभ्या हो सक्ती हैं। पुस्तकालयों और कन्यापाठशालाओंको वार्षिक तीन ही रुपया देनेपर मिलती है। अन्य व्यक्तियों को ६) छः रुपये साल देनेसे मिलती है।

पत्र व्यवहारका पता—

कार्य्याध्यक्ष, आर्य्यमहिला कार्य्यालय

महामण्डल-भवन, जगत्गंज, बनारस।

# श्रीआर्यमहिलाहितकारिणी महापरिषद् ।

( गवर्मेण्ट एक्टके अनुसार रजिस्टर्ड )

आर्यमहिलाओंके सब प्रकारके उन्नतिसाधनके लिये श्रीभारतधर्ममहामण्डलके अङ्गरूपसे यह स्त्रीमहासभा स्थापित हुई है।

सब प्रकारकी आर्यमहिलाएं इस सभाकी सभ्या हो सक्ती हैं। सब सभ्यमहोदयों और सभ्यामहोदयाओंको सभाकी मुखपत्रिका आर्य्य-महिला विनामूल्य मिलती है।

समर्थ होने पर ५) रु० साल और असमर्थ होने पर ३) रु० साल देनेसे आर्य्यमहिला मात्र सहयोगिसभ्या हो सक्ती हैं।

स्वदेश और स्वधर्मका हित चाहनेवाली आर्य-महिलाओंको सभ्यश्रेणीभुक्त होना चाहिये।

पत्र भेजनेका पता—

कार्य्याध्यक्ष, आर्य्यमहिलाहितकारिणी महापरिषद्
महामण्डल-भवन, जगतगंज, बनारस

